# ...ीविवाहविधिनिषेधप्रमाणानि

## ...COLLECTION OF AUTHORITIES

## AGAINST POST-PUBERTY MARRIAGE.






PRINTED AT THE BRAHMAVADIN PRESS, MADRAS.

1912.

1. The maximum time allowed for retention of a book shall be one fortnight. It may be borrowed again if not required by others.

2. No reference books shall be lent out.

3. No borrower shall have more than two volumes out of the Library at one time.

4. Borrowers must not pass books from one to another but must return them to the Librarian.

5. Library books must not be used as class-books.

6. Any one who defaces by writing or otherwise damages any book shall pay the full cost of the book or of the entire works, if it consists of more than one volume.

7. The borrower shall be responsible for the value of the books lent out to him if they are lost, damaged or otherwise cannot be returned to the Library when they are due or recalled.

8. The presence of the voucher with the Librarian shall be considered sufficient proof of the non-return of books.



1615-36 The Bangalore Press

# शुद्धाशुद्ध पत्रिका।

| पुटं | पाङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 5 | पशस्ता | प्रशस्ता |
| 3 | 2 | पितृणां | पितॄणां |
| 3 | 7 | मन्त्रवता | मन्त्रवत |
| 4 | 15 | सूर्य वर्चसं | सूर्यवर्चसं |
| 6 | 6 | सौ भीवाङ्गुष्ठं | सोऽभीवाङ्गुष्ठ |
| ,, | 14 | सुप्रजस्वं | सुप्रजस्त्वं |
| 8 | 2 | योष्टाः | योष्टाः |
| 8 | 8 | व्रताऽव्रुताजि | व्रता व्रतानि |
| ,, | 15 | पाटः | पाठः |
| ,, | 18 | रेतो भृत् | रेतोभृत् |
| ,, | 19 | बाक्त्मं | वाक्त्वं |
| 9 | 5 | प्राग्घोमात् | प्राग्घोमात् |
| ,, | 8 | अग्नेय | अग्नये |
| ,, | 12 | दीक्ष्ये | दीङ् क्षये |
| ,, | 15 | ओप्यभिघारयति | ओप्याभिघारयति |
| 11 | 10 | देवाणां | देवॄणां |
| 12 | 8 | चर्मानहुहं | चर्माऽऽनडुहं |
| 14 | 3 | परि च क्षते | परिचक्षते |
| ,, | 8 | वससा | वाससा |
| ,, | 13 | प्रफर्व्यँ | प्रफर्व्यँ |

| पुटं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 15 | 13 | द्व्याहृतीभिः | ब्याहृतीभिः |
| ,, | 14 | उतराभ्यां | उत्तराभ्यां |
| 16 | 1 | मम्मातरिश्वा | सम्मातरिश्वा |
| ,, | ,, | समुदेष्टौ | समुदेष्ट्री |
| ,, | 15 | बह्वचास्तु | बह्वृचास्तु |
| ,, | 16 | ऊकारान्यरं | ऊकारात्परं |
| 17 | 11 | सरस्व ति | सरस्वती |
| 18 | 19 | एरयख | एरयस्व |
| ,, | 20 | प्रोत्साह्व्य | प्रोत्साह्य |
| 19 | 2 | शकारः | सकारः |
| 21 | 17 | तब्रमवीत् | तमब्रवीत् |
| 22 | 1 | अनाकूल | अनाकुल |
| 26 | 3 | कामयीति | कामयेत |
| 26 | 1 | पुरस्तत् | पुरस्तात |
| ,, | 8 | तावेह | तावेहि |
| ,, | 10 | परिणियऽश्मानं | परिणीयाश्मानं |
| ,, | 12 | द्विलाजान् | द्विर्लाजान् |
| 28 | 10 | जीवंरुदन्ति | जीवांरुदन्ति |
| 29 | 3 | अस्यानडुहं | अस्याऽऽनडुहं |
| ,, | ,, | प्राग्रीवं | प्राग्ग्रीवं |
| ,, | 7 | अश्शायिनौ | अधश्शायिनौ |
| 29 | 10 | संज्ञिता | संज्ञिताः |
| 30 | 11 | उत्सन्तत्वात् | उत्सन्नत्वात् |

| पुटं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 31 | 4 | अभ्युत्क्रमयति | अभ्युत्क्रामयति |
| ,, | 5 | अभ्युक्रामयेत्पूंक्य | अभ्युत्क्रामयेत्पूर्वं |
| 32 | 14 | तूष्णिं | तूष्णीं |
| 35 | 11 | उपस्थानत् | उपस्थानात् |
| 36 | 1 | क्रामयेत | कामयेत |
| ,, | 10 | रति शलिा | रतिशीला |
| ,, | 14 | ,, | ,, |
| ,, | 15 | वर्पैणाधिका | वर्षेणाधिका |
| ,, | 16 | पश्चाञ्जाता | पश्चाज्जाता |
| 37 | 8 | प्रक्षासय | प्रक्षाल्य |
| ,, | 9 | अग्नेरुप | अग्नेरुप |
| 38 | 9 | शलीकिः | शालिकिः |
| 39 | 7 | उादपात्रं | उदपात्रं |
| 40 | 10 | ब्रह्मण | ब्राह्मण |
| 42 | 14 | अपुंवृत्तार्थायाः | अपवृत्तार्थायाः |
| ,, | ,, | प्राणिपस्यैतं | प्राणिस्येतं |
| 42 | 15 | अस्याचान्तोदकायै | अस्या आचान्तोदकायै |
| 43 | 1 | मन्ते | सन्ते |
| 44 | 15 | तिरावत् | त्रिरात्रात् |
| 45 | 7 | रन्धाणि | रन्ध्राणि |
| 46 | 11 | त्रिरात्रादूर्ध्वं | त्रिरात्रादूर्ध्वं |
| 48 | 15 | अतिरिस्का | अतिरिक्ता |
| 49 | 12 | त्रितीयोध्थायः | तृतीयोऽध्यायः |

| पुटं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 58 | 7 | ज्येष्टो | ज्येष्ठो |
| 67 | 13 | । जता | जितो |
| 70 | 5 | मातमाह्हो | मातामहो |
| 71 | 16 | क्रन्या | कन्या |
| 80 | 9 | मप्नोति | माप्नोति |
| 81 | 20 | शेषार्किंचित् | शषात्किंचित् |
| 83 | 10 | वैंद्यात् | विद्यात् |
| 83 | 12 | मातृत्तद् | मातृदत्तं |



॥ श्रीः ॥

# ॥ वैवाहिकमन्त्रभाष्यम् ॥

हरदत्तमिश्रप्रणीतम्.



## आपस्तम्बगृह्यसूत्रं

### खण्डः 4.

[सू—1.] सुहृदः समवेतान् मन्त्रवतो वरान् प्रहिणुयात् ।

[सू—2.] तानादितो द्वाभ्यामभिमन्त्रयेत । "प्रसुग्मन्ता" इति ।

[सू—3.] स्वयं दृष्ट्वा तृतीयां जपेत् । "अभ्रातृघ्नीम्" इति ।

[सू—4.] चतुर्थ्या समीक्षेत ।

[मन्त्रः] अघोरचक्षुरपतिघ्न्येधि शिवापतिभ्यस्सुमनास्सुवर्चाः जीवसूर्देवकामा स्योना शंनो भव द्विपदे शंचतुष्पदे ॥

चतुर्थ्या समीक्षेत—अघोरेति। अवयवशो निरूपणं समीक्षणम्। हे वधु! त्वं अघोरचक्षुः अपतिघ्नी च एधि भव। शिवा पतिभ्यः। देवराद्यपेक्षं बहुवचनम्। मह्यं पत्ये देवरादिभ्यश्च शिवा भव। सुमनाः सुवर्चाश्च भव। या जीवत एव सूते, सा जीवसूः। देवान् यष्टव्यत्वेन या कामयते, सा देवकामा। स्योना प्रशस्ता। सर्वत्र भवेति सम्बध्यते। नः अस्माकं सम्बन्धिने द्विपदे शंभव, चतुष्पदे च शंभव सुखकरी भव।

[सू—5.] अङ्गुष्ठेनोपमध्यमया चाङ्गुल्या दर्भं संगृह्योत्तरेण यजुषा तस्या भ्रुवोरन्तरं संमृज्य प्रतीचीनं निरस्येत्। "इदमहम्" इति।

[सू—6.] प्राप्ते निमित्त उत्तरां जपेत्।

[मन्त्रः] जीवाँ रुदन्ति विमयन्ते अध्वरे दीर्घामनुप्रसितिं दीधियुर्नरः। वामं पितृभ्यो य इदँ समेरिरे मयः पतिभ्यो जनयः परिष्वजे।

कन्यावियोगकाले बन्धुजनस्य रोदने जपः—'जीवाँ रुदन्तीति॥ कन्याया एव रोदने इत्याश्वलायनः। यथाऽऽह—'जीवां रुदन्तीति रुदत्यां' इति॥ जीवन्तीमेवैनां कन्यां उद्दिश्य रुदन्ति अध्वरे, ध्वरतिर्हिंसाकर्म। हिंसारहिते काले तदिदं विमयन्ते व्यत्ययं कुर्वते हर्षस्थाने शोचन्ति। त इमे दीर्घां दीर्घकालानुवर्तिनीं प्रसितिं प्रकृष्टं भावबन्धं आवयोः अनुदीधियुः अनुध्याय-

न्तु नरः कन्यावन्धुमनुष्याः। ये इदं विवाहकर्म समेरिरे प्रेरिरे प्रवर्त-यन्तिस्म। कीदृशं? पितृभ्यो वामं पितृणां वमनीयम्, मयः पतिभ्यः पत्युर्मम सुखरूपम्, जनयः षष्ठ्येकवचनस्थाने प्रथमाबहु-वचनम्। जन्याः अस्याः वध्वाः परिष्विजे परिष्वङ्गाय पर्याप्तम्, एवंभूतं विवाहकर्म प्रवर्तितवन्तः, ते कन्याबन्धुमनुष्याः आवयोः भाविनं भावबन्धमालोच्य मारुदन्तु इत्यर्थः।

[सू—7.] युग्मान् समवेतान् मन्त्रवता उत्तरयाद्भयः प्रहिणुयात्। "ब्युक्षत्क्रूरम्" इति।

[सू—8.] उत्तरेण यजुषा तस्याः शिरसि दर्भेण्वं निधाय तस्मिन्नुत्तरया दक्षिणं युगच्छिद्रं प्रतिष्ठाप्य छिद्रे सुवर्णं उत्तरयाऽन्तर्धाय—

[मन्त्रः] अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्ताँ श्वश्रुवो देवराश्च॥ खेऽनसः खेरथः खेयुगस्य शचीपते। अपालामिन्द्र त्रिः पूर्त्व्यकरथ्सूर्यवर्चसम॥ शन्तेहिरण्यँ शमु सन्त्वापः शं ते मेधीभवतु शंयुगस्य तृद्म। शं त आपः शतपवित्रा भवन्त्वथा पत्या तन्वँ सँसृजस्व॥

बध्वाः शिरासि दर्भेण्वनिधानम् अर्यम्ण इति। अर्यमा आदित्यः तस्य प्रसादात् अग्निं इदं विवाहाग्निं परियन्तु क्षिप्रं परिवेष्टय मण्डलीभूताः तिष्ठन्तु यथेदमिण्वं मण्डलीभूतं, परीत्यच

प्रतीक्षन्तां पश्यन्तु । के? श्वश्रुवः बध्वा ममच मातरः देवराश्च वध्वा ममच भ्रातरः ॥

तस्मिन्निण्वे दक्षिणं युगच्छिद्रं प्रतिष्ठापयति—खेऽनसइति ॥ अत्रेतिहासमाचक्षते — अपालानाम काचित् कन्या श्वित्रिणी । तां न कश्चिदुपयेमे । तस्याश्च मनसि कामः सदा बभूव कथं अहं इन्द्रं यजे इति । सा कदाचित् स्नानार्थं नद्यां अवतीर्णा स्रोतसा ह्रियमाणा तमेव कामं मनसि दधाना स्रोतसोपनीतं सोममपश्यत् । तं दन्तैः पिष्ट्वा तद्रसं इन्द्राय उपाहरत् । तमिन्द्रः पीत्वा रथस्यानसो युगस्येति त्रयाणां छिद्रेषु अपोनिस्सार्य ताभिः तां त्रिः पूत्वा सूर्यवर्चसमकरोत् । इति तदेतत् 'कन्या वारवायति' इत्यस्मिन् वर्गे द्रष्टव्यम् । (ऋ. सं. VI. 6-14.) रथइति षष्ठ्यर्थेप्रथमा । रथादीनां खेषु छिद्रेषु अपो निस्सार्य त्रिः पूर्त्वी । छान्दसो रेफउपजनः । पूत्वा शोधयित्वा । हे शचीपते हे इन्द्र! त्वं अपालांनाम कन्यां सूर्य वर्चसं अकरत् अकरोः । पुरुषव्यत्ययश्छान्दसः । तथैव एनामपि कुर्वित्यर्थः ।

छिद्रे सुवर्णनिधानमन्त्रः—शंत इति । छिद्रे निधीयमानं हिरण्यं ते शं भवतु । शमु सन्तु । 'उ' इत्यनर्थकः पादपूरणः। आपश्च तत्र निषिच्यमानाः ते शं सुखं सन्तु भवन्तु । अप्रसिद्धपाठस्तु 'शमु शंत्वाप' इति । तत्राप्यर्थः स एव । शकारस-

कारयोर्व्यत्ययः । मेधी खलेवाली अत्र तु युगस्य अभिधानमेतत्। मेध्यपि ते शंभवतु । शतपवित्राः बहूनां शोधयित्र्यः आपश्च ते शं भवन्तु । विशेषणविवक्षया पुनर्वचनम् । अथ अनन्तरं पत्या मया तन्वं तनुं संसृजस्व संयोजय सम्भोगकाले ।

[सू—8 cont.] उत्तराभिः पञ्चभिस्स्नापयित्वोत्तरयाऽहतेन वाससाऽऽच्छाद्योत्तरया योक्त्रेण सन्नह्यति ।

[सू—9.] अथैनामुत्तरया दक्षिणे हस्ते गृहीत्वाऽग्निमभ्यानीयाऽपरेणाग्निमुदगग्रं कटमास्तीर्य तस्मिन्नुपविशत उत्तरो वरः ।

[सू—10] अग्नेरुपसमाधानाद्याज्यभागान्तेऽथैनामादितो द्वाभ्यां अभिमन्त्रयेत—

[मन्त्रः] सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ॥

आज्यभागान्ते उत्तराभ्यामभिमन्त्रणं—सोमः प्रथम इति ॥ सोमः प्रथमः त्वां विविदे लब्धवान् । तत उत्तरो गन्धर्वः विश्वावसुः । तृतीयस्त्वग्निः ते तव पतिः । मनुष्यजाः मनुष्यजातस्त्वहं ते तुरीयः चतुर्थः पतिः ॥

एष एवार्थः किंचिद्विशेषेणोच्यते—सोमोऽददिति ॥ सोमः अददत् अदात् दद्याद्वा गन्धर्वाय । गन्धर्वः अग्नये । अग्निः रयिं धनं पुत्रांश्च इमां त्वांच मह्यमदात् ॥

[सू 11;—14.] अथास्यै दक्षिणेन नीचा हस्तेन दक्षिणमुत्तानं हस्तं गृह्णीयात् ॥ यदि कामयेत स्त्रीरेव जनयेयमित्यङ्गुळीरेव गृह्णीयात् ॥ यदि कामयेत पुंस एव जनयेयमित्यंगुष्ठमेव सो भीवांगुष्ठमभीव लोमानि गृह्णाति ॥ गृभ्णामित इत्येताभिश्चतसृभिः ॥

[मन्त्रः] गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः॥ य एति प्रदिशस्सर्वादि शोऽनुपवमानः । हिरण्यहस्त ऐरम्मस्सत्वा मन्मनसं कृणोतु ।

यद्योगाद्विवाहे पाणिग्रहणशब्दः । तत्र मन्त्राश्चत्वारः—गृभ्णामित इति । ते तव हस्तं अहं गृभ्णामि गृह्णामि । किमर्थं? सुप्रजास्त्वाय शोभनाः प्रजाः यस्याः सा सुप्रजाः । तस्या भावः सुप्रजस्त्वम् । छान्दसो दीर्घः, तस्मै । किञ्च मया पत्या सह यथा त्वं जरदष्टिः असः स्याः, तथा गृह्णामि जरदवस्थायाः प्राप्तिः तस्याः प्रकाशनं वा यस्याः सा जरदष्टिः । पुरन्धिः पुरुधीः बहुप्रज्ञः बहुकर्मा वा । भगादीनां चैतत् प्रत्येकं विशेषणम् । अन्येतु—इन्द्रस्याभिधानं मन्यन्ते । भगादयो देवाः मह्यं त्वा अदुः दत्तवन्तः । किमर्थं? मम गार्हपत्याय गार्हस्थ्याय ॥

य एतीति । एष पवमानः सर्वा दिशः प्रदिशश्चान्वेति अनुक्रमेणैति । हिरण्यहस्तः भक्तेभ्यो देयं हिरण्यं हस्ते यस्य सः

हिरण्यहस्तः ऐरम्मः, इरा अन्नं, तां मिमीते करोतीति इरम्मः अग्निः। तस्यायं सखा ऐरम्मः । वायुसख इति ह्यग्निं उपचरन्ति । स एवम्भूतो वायुः सः त्वा त्वां मन्मनसं मयि मनो यस्याः सा मन्मनाः, तादृशीं कृणोतु करोतु ॥

[सू—15.] अथैनामुत्तरेणाग्निं दक्षिणेन पदा प्राचीमुदीचीं वा दिशमभिप्रक्रमयत्येकामिष इति ।

[सू—16.] सखेति सप्तमे पदे जपति—

[मन्त्रः] सखा सप्तपदा भव सखायौ सप्तपदा बभूव सख्यंते गमेयँ सख्यात्ते मायोँ सख्यान्मे मा योष्ठास्समयाव संकल्पावहै संप्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसानौ सन्नौ मनाँसि संव्रता सुमचित्तान्याकरम् । सा त्वमस्य मूहममूहमस्मि सा त्वं द्यौरहं पृथिवी त्वँ रेतोऽहँ रेतोभृत्वं मनोऽहमास्मि वाक्त्वँ सामाहमस्म्यृक्त्वँ सामामनुव्रता भव पुँसे पुत्राय वेत्तवै श्रियै पुत्राय वेत्तव एहि सूनृते ॥

सखेति सप्तमे पदे जपति—सप्त पदानि यया क्रान्तानि सा सप्तपदा । एवंभूता त्वं सखा भव । सप्तपदा सप्तपदौ । द्विवचनस्याकारः । सप्तपदौ त्वं च अहं च सखायौ बभूव बभूविव छान्दसो विशब्दस्य लोपः । आदरार्थे पुन-

र्वचनम् । सख्यं ते गमेयं गम्यासम् । सख्यात्ते मायोषं वियुक्तः पृथक्कृतो माभूवम् । त्वं च सख्यात् मे मा योष्ठाः । समयावेति संपूर्वस्य इणो लोटिरूपम् । समयाव संगतौ स्याव । संकल्पावहै इदमिदं च कर्तव्यमिति । संप्रियौ परस्परं संप्रीयमाणौ, रोचिष्णू सदृशसम्बन्धत्वात् परस्पराश्रयेण दीप्यमानौ, सुमनस्यमानौ सुमनायमानौ, भृशादिरयं छान्दसः सलोपाभावः । इषमूर्जमभिसंवसानौ सहानुभवन्तौ समयावेति सम्बन्धः। नौ आवयोः, मनांसि व्यापारबहुत्वान्मनोबहुत्वम् । समाकरम् - सङ्गतानि करोमि । तथा व्रताऽव्रुतानि कर्माणि समाकरम् यस्त्वया धर्मश्चरितव्यः सः अनया सहेति । तथा समुचित्तानि, 'उ' इत्यनर्थकः । मनस उक्तत्वाद्बाह्ये न्द्रियाण्यत्र चित्तानि । तान्यपि समा करम् । सा त्वं सेति ऋचोऽभिधानम् । अम इति साम्नः । ' सैवनामऋगासीत् अमोनाम साम ' इति ( ऐ - ब्रा - III - 2 - 23 ) बह्वृचब्राह्मणदर्शनात् । त्वं साऽसि ऋगासि । अमः अहम् । संहिताकाले ओकारस्य ऊकारः बह्वृचानां तु ' अमोऽहम् ' इत्येव पाठः । एतदेवादरार्थं पुनरुच्यते । अमूहमस्मि अमः अहमस्मि । सा त्वं ऋक्त्वम्। यथा ऋक्सामे परस्परं संबद्धे एवमावामपीत्यर्थः । द्यौरहं पृथिवी त्वम्, औत्तराधर्यं अत्र विवक्षितम् । रेतोऽहम् , कार्यकारणयोरभेदोपचारः। रेतो भृत् त्वं मयानिषिक्तस्य रेतसो भर्त्री त्वम्। मनोहमस्मि वाक्त्वं, यथा मनसा चिन्तितं वाक् ब्रूते एवमावयोरानुकूल्यमित्यर्थः । सामाहमस्मि ऋक् त्वम् । एवंभूता सा त्वं मां प्रति अनुव्रता अनुकूला भव । किमर्थं? पुंसेपुत्राय

वेत्तवै पुमांसं पुत्रं लब्धुम्, श्रियै पुत्राय वेत्तवै श्रियश्च पुत्रस्य च लाभार्थम् । पुत्रस्य पुनर्वचनमादरार्थम् । स्त्र्यपत्यलाभार्थं वा । एहि आगच्छ प्रियावाक् सूनृता । तद्योगात् सूनृते इत्यामन्त्रणम् ।

## खण्डः 5.

[सू—1.] प्राग्घोमात्प्रदक्षिणमग्निं कृत्वा यथास्थानमुपविश्य अन्वारब्धायामुत्तरा आहुतीर्जुहोति, सोमाय जनिविदे स्वाहेत्येतैः प्रतिमन्त्रम् ।

[मन्त्रः] (1) सोमाय जनिविदे स्वाहा (2) गन्धर्वाय जनिविदे स्वाहा (3) अग्नेयजनिविदे स्वाहा (4) कन्यला पितृभ्यो यती पतिलोकमव दीक्षामदास्थ स्वाहा । इत्यादयः षोडश प्रधानाहुति मन्त्राः ।

कन्यलेति ॥ कन्यैव कन्यला । लशब्दः उपजनः । पितृभ्यः पितृकुलात्, पतिलोकं पतिकुलं, यतीगच्छन्ती, दीक्षां कन्याव्रतं, अवादास्थ, दीक्षये इत्यन्तर्भावितण्यर्थस्य लुङ्प्रथमपुरुषैकवचने रूपं । तकारस्य थकारश्छान्दसः । अवक्षापितवती, त्यक्तवतीत्यर्थः ॥

[सू—2.] अथैनामुत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति । "आतिष्ठ" इति ।

[सू—3] अथास्या अञ्जालावुपस्तीर्य द्विर्लाजानोप्यऽभिघारयाति ।

[सू—4] तस्या स्सोदर्यो लाजानावपतीत्येके ।

[सू—5.] जुहोति "इयं नारी" इति ।

[सू—6.] उत्तराभिस्तिसृभिः प्रदक्षिणमग्निं कृत्वाऽश्मानमास्थापयति यथा पुरस्थात् ।

[सू—7-9.] होमश्चोत्तरया । पुनः परिक्रमणम् । आस्थापनम् ।

[सू—10-12.] होमश्चोत्तरया । पुनः प्ररिक्रमणम् । जयादि प्रतिपद्यते ।

[सू—13.] परिषेचनान्तं कृत्वोत्तराभ्यां योक्त्रं विमुच्यतां ततः प्रवावाहयेत् प्रवा हारयेत् ।

[सू—14-16.] समोप्यैतमग्निमनुहरन्ति । नित्यः । धार्यः ।

[सू —17-19.] अनुगतोमन्थ्यः श्रोत्रियाऽगारा द्वाऽऽहा र्यः । उपवासश्चाऽन्यतरस्य भार्यायाः पत्युर्वा ।

[सू—20.] अनुगतेऽपि वोत्तरया जुहुयान्नोपवसेत् ।

[सू—21.] उत्तरा रथस्योत्तम्भनी ।

[सू—22.] वाहावुत्तराभ्यां युनक्ति दक्षिणमग्रे ।

[सू—23.] आरोहतीमुत्तराभिराभिमन्त्रयते ।

[मन्त्रः] संराज्ञी श्वशुरे भव संराज्ञी श्वश्रुवांभव । ननान्दरि संराज्ञी भव संराज्ञी अधि देवृषु ॥ स्नुषाणाँ श्वशुराणां प्रजायाश्च धनस्यच । पतीनाश्च देवृणाश्च सजातानां विराड्भव ॥

संराज्ञीति । श्वशुरे संराज्ञी वल्लभा भव श्वश्रुवांच संराज्ञी भव । ननान्दरि पत्युः स्वसा ननान्दा वध्वाः, तस्यां च संराज्ञी भव । तथा देवृषु देवरेषु पत्युर्भ्रातरो वध्वाः देवराः, तेष्वपि संराज्ञी भव अधिशब्दः सप्तम्यर्थानुवादी ॥

एतदेव पुनरुच्यते—स्नुषाणामिति । अस्मद्गृहे याः स्नुषाः, तासाम्, श्वशुराणां श्वशुरस्य तद्भ्रातृणाम् , प्रजायाश्च तत्र आगामिन्याः, धनस्यच मदीयस्य, पतीनां च पर्त्युमम मत्स्थानीयानांच, देवणां च देवराणां च अन्येषांच सजातानां गृहे मया सह जातानाम् , विराट् ईश्वरी भव ।

[सू—24-25.] सूत्रेवर्त्मनोर्व्यवस्तृणात्युत्तरया, नीलं दक्षिणस्यां लोहितमुत्तरस्यां । ते उत्तराभि रभियाति ।

[सू—26.] तीर्थस्थाणु चतुष्पथव्यतिक्रमे चोत्तरां जपेत् ।

## खण्डः 6.

[सू—1-3.] नावमुत्तरयानुमन्त्रयते । नचनाव्यांस्तरतीवधूः पश्येत् । तीर्त्वोत्तरांजपेत् ।

[सू—4.] श्मशानाधिव्यतिक्रमे भाण्डे रथे वा रिष्टेऽग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं करोति ।

[सू—5.] क्षीरिणामन्येषां वा लक्षमण्यानां वृक्षाणां नदीनां धन्वनां च व्यतिक्रम उत्तरे यथालिङ्गं जपेत् :

[सू—6.] गृहानुत्तरया संकाशयाति ।

[सू—7] वाहावुत्तराभ्यां विमुञ्चति दक्षिणमग्रे ।

[सू—8, 9.] लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोम मध्येऽगारस्योत्तरयाऽऽस्तीर्य गृहान्प्रपादयन्नुत्तरां वाचयाति दक्षिणेन पदा । न च देहलीमभितिष्ठाति ।

[सू—10.] उत्तरपूर्वेदेशेऽगारस्याऽग्नेरुपसमाधानाद्याज्य भागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते, परिषेचनान्तं कृत्वा—उत्तरया चर्मण्युपविशत उत्तरो वरः ।

[सू—11.] अथास्याः पुँस्वोर्जीवपुत्रायाः पुत्रमङ्क उत्तरयोपवेश्य तस्मै फलान्युत्तरेण यजुषा प्रदायोत्तरे जपित्वा वाचं यच्छत आनक्षत्रेभ्यः ।

[मन्त्रः] प्रस्वस्स्थः प्रेयं प्रजया भुवने शोचेष्ट ॥ इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि एना पत्या तन्वँ सँसृजस्वाथा जीव्री विदथमावदासि ।

तस्मै फलानि प्रयच्छति—प्रस्वस्स्थ इति। प्रसूयन्त इति प्रस्वः हे फलानि! यूयं प्रस्वः स्थः प्रसवशीलाः स्थ। छान्दसो विसर्जनीयः। स्थ भवथ। इयमपि वधूः भुवने प्रजया अपत्येन प्रसोचेष्ट प्रसोषीष्ट। यथा यूयं प्रसवशीलाः स्थ। तथेयमपि युष्मत्प्रसादेन प्रसवशीला भवत्वित्यर्थः।

उत्तरेजपति—इहप्रियमिति। इह गृहे प्रजया प्रियं ते समृद्धयतां प्रीतिस्ते वर्धताम्। अनेन प्रजासम्पत्तिरुक्ता, धर्मसम्पत्तिमाह, अस्मिम् गृहे गार्हपत्याय गृहपतिभावाय, जागृहि। अतिथीनामग्नीनां च परिचरणे अवहिता भव। कामसम्पत्तिमाह—एना अनेन, पत्या मया, तन्वं तनुं तव शरीरम्, संसृजस्व सम्भोगकाले।एवं चिरकालमनुभूय अथ अनन्तरं, जीव्री-जीर्णाभिधानमिति निरुक्तकार आह-'आत्वारम्भनजिव्रयः' ऋ-सं-VI-3-45 इत्यत्र जीर्णा सती विदथे यज्ञं तद्विषयं वक्तव्यं पुत्रादीनां आवदासि आभिमुख्येन वद; इत्थमिदं कर्तव्यमिति।

[सू—12.] उदितेषु नक्षत्रेषु प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य उत्तराभ्यां यथालिङ्गं ध्रुवमरुन्धतीं चदर्शयाति।

## खण्डः 7.

[सू—1-6.] उपाकरणे समापनेच ऋषिर्यः प्रज्ञायते। सदसस्पति र्द्वितीयः। स्त्रियाऽनुपेतेन क्षारलवणावरान्नसंसृष्टस्य चहोमं परि च क्षते। यथोपदेशं काम्यानि बलयश्च । सर्वत्र स्वयं प्रज्वलितेऽग्नावुत्तराभ्यां समिधावादध्यात् । आपन्माश्रीः श्रीर्मागादितिवा ।

[सू—7.] एतदहर्विं जानीयाद्यदहर्भार्यामावहते ।

[सू—8.] त्रिरात्रमुभयो रधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च।

[सू—9.] तयों श्शय्यामन्तरेण दण्डो गन्धलिप्तो वससासूत्रेण वा परिवीत स्तिष्ठति ।

[सू—10.] तं चतुर्थ्यापरराात्र उत्तराभ्यामुत्थाप्य प्रक्षाल्य निधाय—

[मन्त्रः] उदीर्ष्वातो विश्वावसो नमसेडामहेत्वा । अन्यामिच्छ प्रफर्व्यँ संजायां पत्या सृज । उदीर्ष्वातः पतिवति ह्येषा विश्वावसु-न्नमसागीर्भिरीट्टे अन्यामिच्छ पितृषदं व्यक्ताँ सते भागो जनुषा तस्य विद्धि ।

दण्डोत्थापनमन्त्रः उदीर्ष्वात इति । उदीर्ष्व उत्तिष्ठ, अतः

शयनात् हे विश्वावसो! विश्वावसुर्नाम गन्धर्वः। तद्बुद्ध्या दण्डः स्थापितः तेनैवं संबोध्यते। नमसा नमस्कारेण, त्वा त्वां, ईडामहे याचामहे। अन्यां इच्छ प्रफर्व्यं प्रथमवयसं स्त्रियम्। इमां तु मम जायां पत्या मया सह संसृज।

उदीर्ष्वात इति। उदीर्ष्व उत्तिष्ठ, अतः शयनात्। पतिवतिह्येषा, छान्दसो ह्रस्वः। एषा हि पतिवती, मया पत्या तद्वती, विश्वावसुं त्वां नमसा नमस्कारेण गीर्भिः स्तुतिभिश्च ईड्टे याचे। अतश्च अन्यां इच्छ पितृषदं पितृगृहे स्थितां व्यक्तां अदत्तां असमाप्तविवाहाम् स हि ते स्वभूतो भागः जनुषा जन्मना तदर्थेत्वं जात इत्यर्थः। तस्य विद्धि तं लभस्व।

सू—10-cont. अग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादि प्रतिपद्यते परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य तस्याश्शिरस्याज्य शेषाद्व्याहृतीभिरोङ्कारचतुर्थीभिरानीय उत्तराभ्यां यथालिङ्गं मिथस्समीक्ष्योत्तरयाऽऽज्यशेषेणहृदय देशौ सम्मृज्य।

[मन्त्रः] अपश्यन्त्वा मनसा चेकितानं तपसो जातं तपसोविभूतम्। इह प्रजामिह रयिँ रराणः प्रजायस्व प्रजयापुत्रकाम। अपश्यंत्वा मनसा दीध्यानाँ स्वायां तनूऋत्विये नाथमानाम्। उपमामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे। समञ्जन्तु

विश्वेदेवास्समापो हृदयानिनौ । मम्मातरिश्वा सं धाता समुदेष्ट्रो दिदेष्टुनौ ।

अथ वधूर्वरं समीक्षते । अपश्यन्त्वेति । त्वा त्वां अपश्यं पश्यामि मनसा हृदयेन सस्नेहमित्यर्थः । चेकितानं जानन्तं मदाभिप्रायम्, तपसः गर्भाधानादेरुपनयनपर्यन्तात्, जातं द्विजत्वेन जातम्, तपसः भिक्षाचर्यादेरध्ययनाङ्गभूतात्, विभूतं विभूतिमत्त्वेन निष्पन्नं विभूतिः श्रीः ऋचस्सामानियजूँषि, सा हि श्रीरमृतासतां इति दर्शनात् । इहमयि, प्रजां इह च गृहे, रयिं धनं रराणः ददत् प्रजया प्रजायस्व हे पुत्रकाम । यत्प्रजाया जन्म, तज्जनयितुरेव जन्म श्रूयते हि—"प्रजामनुप्रजायसे तदु ते मर्त्यामृतम्"— इति ।

वरोवधूमीक्षते—अपश्यन्त्वेति । त्वा त्वां अहं मनसा अपश्यं पश्यामि दीध्यानां दीप्यमानां ध्यायन्तीं वा स्वायां तनू स्वायां तन्वां सप्तम्याः पूर्वसवर्णदीर्घः तत्र "ईदूतौ च सप्तम्यर्थे"—इति प्रगृह्यसंज्ञायां सत्यामपि छान्दस ऊकारः सानुनासिकः । बह्वृचास्तु शुद्धमेवाधीयते इहापि केचित् ऊकारान्परमनुस्वार मधीयते ऊकारान्तस्तु शुद्धः । ऋत्विये ऋतुकाले भवो गर्भः ऋत्वियः । द्वितीयैकवचनस्य शे आदेशः ऋत्वियम्, नाथमानाम्, प्रार्थयमानां स्वे शरीरे मत्तोगर्भं प्रार्थयमानामित्यर्थः । उपेत्ययमनुशब्दस्यार्थे द्रष्टव्यः मां उच्चा उच्चं सम्भोगकाले उपरिसन्तम्, युवतिः यौव-

नावस्थां प्राप्ता त्वं, उपबभूयाः अनुभूयाः अनुभूय च प्रजया प्रजायस्व हे पुत्रकामे ।

उत्तरयाऽऽज्यशेषेण हृदयदेशौ समनक्ति, समञ्जन्त्विति । नौ आवयोः हृदयानि व्यापारबहुत्वात् बहुवचनम् । विश्वेदेवाः समञ्जन्तु सस्नेहानि कुर्वन्तु । आपश्च समंजन्तु । मातरिश्वा वायुः, सोऽपि समनक्तु । धाता, समनक्तु समुदेष्ट्री समित्यस्य देष्ट्रीत्यनेन सम्बन्धः । संदेष्ट्री अन्तर्भावितण्यर्थोऽयम् , सन्देशस्य कारयित्री , संदेशः परस्परसम्भाषणम् । का पुनः सन्देष्ट्री सरस्वती , सम्भाषणस्य तदायत्तत्वात् । गर्भाधाने च तस्याः व्यापारदर्शनात्— 'गर्भं धेहि सरस्वति' इति । सा सन्देष्ट्री दिदेष्टु । अयमप्यन्तर्भावितण्यर्थः । सन्देशं कारयतु, नौ आवयोः सम्भोगकालानुरूपं सम्भाषणं सरस्वति कारयत्वित्यर्थः ।

[सू—10 cont.] उत्तरास्तिस्रो जपित्वा·

[मन्त्रः] प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिः सहसाम इन्द्र । विश्वैर्देवैरातिभिस्सँरराणः पुँसां बहूनां मातरस्स्याम ॥ आनः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविश शन्नो भव द्विपदे शंचतुष्पदे ॥ तां पूषाञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरु उशती विस्रयातै यस्यामुशन्तः प्रहरेम शेफम् ।

अथ जपः—हे प्रजापते! त्वं मे तन्वं तनूं शरीरं जुषस्व सेवस्व प्रविश येनाहं रेतस्सेके समर्थस्स्याम् , 'आसिंचतु प्रजापतिः' इति दर्शनात् । हे त्वष्टः ! त्वमपि मे तन्वं जुषस्व देवेभिः देवैः । देवाः विष्ण्वादयः 'विष्णुर्योनिं कल्पयतु' इत्यादिमन्त्रे निर्दिष्टाः । तैः सह कीदृशस्त्वं? सहसामः, सहेरसानच् , सहसानः तस्यैव छान्दसो नकारस्य मकारः रूपनिर्माणे समर्थ इत्यर्थः । 'त्वष्टारूपाणि पिंँशतु' इति दर्शनात् । हे इन्द्र! त्वमपि मे तन्वं जुषस्व, विश्वैर्देवैः, तव रातिभिः मित्रभूतैः सह संरराणः सम्यगस्मभ्यं अभिहितं ददत् , पुंसां बहूनां मातरः, 'पिता मात्रा' इति पितुरेकशेषे प्राप्ते मातुरेकशेषः छान्दसः। द्वयोश्च बहुवचनम् मातरौ मातापितरौ स्याम स्याव। युष्मत्प्रसादादावां बहुपुत्रौ स्यावेत्यर्थः ।

आन इति । न इति द्वयोर्बहुवनम्। प्रजापतिः आवयोः प्रजां आजनयतु । आजरसाय आजरसम् , आवां समनक्तु सस्नेहौ करोतु अर्यमा आदित्यः । ततः त्वंच अदुर्मङ्गलीः दुष्टानि मङ्गलानि लक्षणानि यस्याः सा दुर्मङ्गली ततोन्या अदुर्मङ्गलीः छान्दसः सुलोपाभावः। सुमङ्गलीभूत्वा पतिलोकं पत्युर्मम लोकं गृहं आविश, आवस। 'शंनः' इत्यादि गतम् ।

तामिति ॥ हे पूषन् ! यस्यां मनुष्याः बीजं वपन्ति शुक्लं उत्सृजन्ति तां मे शिवतमां अनुकूलतमां कृत्वा एरयख प्रेरयस्व, भार्यां मे प्रोत्साहयेत्यर्थः। भार्यायां हि बीजं वपन्ति, अन्यत्र निषेधात् ।

सा विशेष्यते- या नः 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवचनम्। नः मह्यं ऊरू उशती कामयमाना, विस्रयातै विश्रयातै, शकारस्य शकारः छान्दसः पञ्चमोलकारः विश्रयेत विश्लिष्टौ कुर्यात् । यथा योनिः विवृता भवति । यस्यांच एवंभूतायां उशन्तः कामयमानाः भूत्वा, शेफं शिश्नम्, प्रहरेम प्रक्षिपेम। पूर्ववत् बहुवचनम् ।

सू ॥ शेषँ समावेशने जपेदन्योवैनाम[व]भिमन्त्रयेत–

[मन्त्रः] आरोहोरुमुपबर्हस्व बाहुं परिष्वजस्व जायाँ सुमनस्यमानः। तस्यां पुष्यतं मिथुनौ सयोनी बह्वीं प्रजां जनयन्तौ सरेतसा ॥ आर्द्रया ऽरण्या यत्रामन्थत्पुरुषं पुरुषेण शक्रः। तदेतौ मिथुनौ सयोनी प्रजयाऽमृतेनेह गच्छतम् ॥ अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयं पितॄणामहं जनिभ्यो अपरीषु पुत्रान् ॥ पुत्रिणेमा कुमारिणा विश्वमायुर्व्यश्नुतम् । उभा हिरण्यपेशसा वीतिहोत्रा कृतद्वसू । दशस्यन्त्वा ऽमृताय कँ शमूधो रोमशँ हथो देवेषु कृणुतो दुवः।

अथ समावेशनकाले जपः। अन्योवैनाम[व]भिमन्त्रयेत–आरोहोरुमिति ॥ जपपक्षे तावदात्मनएवायमन्तरात्मनः प्रैषः । हे मदीयशरीरान्तरात्मन् ! अस्या ऊरुं आरोह। आरुह्यच आत्मनो वाहुं वाहू उपबर्हस्व । उपवर्हणमालिङ्गनम्। इहतु तदर्थं प्रसारणम् । आलिंगनाय बाहू प्रसारय । प्रसार्यच परिष्वंजस्व जायाम्। तस्यां सुमनस्यमानः प्रीयमाणो भूत्वा। तथाहि प्रजा, रूपादिसमृद्धा भवति । पुष्यतमित्यादि

जायया सहाभिधानम् । हे जाये ! हे मदीयशरीरान्तरात्मन् ! युवां पुष्यतं पुष्टौ भवतम्, मिथुनौ मिथुनीभूतौ, सयोनी सङ्गतोपस्थेन्द्रियौ, बह्वीं प्रजां जनयन्तौ, सरेतसा सरेतसौ चिरकालमविच्छिन्नेन्द्रियौ । एवैत्रानयोः पुष्टिः। यदुत प्रजासमृद्धिः । अभिमन्त्रणपक्षे तस्यामित्यन्तं पत्युरभिमन्त्रणम् । शिष्टं द्वयोः ।

आर्द्रयेति ॥ अत्रापि जपपक्षे शरीरान्तरात्मनोऽभिधानम् । यत्रेति यथार्थे । यथा कश्चित् आर्द्रया आज्याक्तया अरण्या अग्निं अमन्थत् एवं शक्रः इन्द्रः उपलक्षणमेतत् । पूर्वो विवाहस्य कर्ता इन्द्रादिः पुरुषेण पुरुषलक्षणेन शेफेन पुरुषं पुमांसं गर्भममन्थत् मथनसदृशेन व्यापारेण निष्पादितवान्, तत् तद्वत्, एतौ मिथुनौ मिथुनीभूतौ युवां सयोनी सङ्गतोपस्थेन्द्रियौ सन्तौ प्रजया अमृतेन, प्रजारूपेणामृतेन 'प्रजामनु प्रजायसे तदु ते मर्त्यामृतम्' इति श्रुतेः। इह गृहस्थाश्रमे स्थितौ गच्छतम्, केवलोऽप्ययं गमिः सम्पूर्वस्यार्थे द्रष्टव्यः, सङ्गच्छतं संगतौ भवतम् ॥

अहमिति ॥ अहं ओषधीषु गर्भमदधां दधामि, श्रौतस्मार्तकर्मानुष्ठानद्वारेण । 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिं वृष्टेरन्नं ततः प्रजाः' इति । अहमेव विश्वेषु भुवनेषु अन्तः अवास्थितः परमात्मद्वारेण स्वरूपेणवा । एवंभूतः अहं पितॄणां अर्थाय प्रजा अजनयं जनयामि । अहमेव जनिभ्यः जन्याः अस्याः वध्वाः अवरीषु अवरासु पश्चात् कालभाविनीषु स्नुषासु पुत्रान् जनयामि ।

पुत्रोत्पादनद्वारेण पौत्रा अपि मे सन्त्वित्यर्थः। तदेतज्जपपक्षे यथाश्रुतमेव। अभिमन्त्रणपक्षे तु प्रयुक्तिद्वारेण, प्रयुक्तिश्चाभिमन्त्रणमेव ॥

पुत्रिणेमेति ॥ पुत्रिणेतिद्विवचनस्याकारः । पुत्रिणा पुत्रिणौ इमा इमौ युवाम् कुमारिणा कुमारीभिः दुहितृभिः तद्वन्तौ 'विश्वमायुः' 'सहषोडशं वर्षशतमजीवत्' इत्येवं रूपं व्यश्नुतं प्राप्नुतम्, उभा उभौ, हिरण्यपेशसा हिरण्यपेशसौ पेशइति रूपनाम । परिशुद्धवर्णौ। वीतिहोत्रा वीतिरिति हविर्नाम, हविषा होतारौ कृतद्वसू दकारः छान्दसउपजनः कृतवसू कृतधनौ ।

दशस्यन्त्वेति । दशस्यतिः दानकर्मा। वकारउपजनः बह्वृचास्तु वकारं न पठन्ति। दशस्यन्ता अर्थिभ्योऽपेक्षितानि ददतौ , अमृताय अमरणाय देवत्वप्राप्तये, कं अनर्थकोऽयं निपातः पादपूरणार्थः, शं सं सकारस्य शकारश्छान्दसः । बह्वृचास्तु सकारमेव पठन्ति । ऊधः ऊधस्थानीयं उभयोः उपस्थेन्द्रियम् , रोमशं सञ्जातरोम। अनेन उपभोगयोग्यता लक्ष्यते । रोमोत्पत्तेः प्राक् अनुपभोग्या हि स्त्रियः। तथाच भावयव्यस्य राज्ञो भार्या भावयव्यानीं इन्द्रः पत्युस्सखा परिहसन् उवाच, उपभोग्या त्वं न भवसि, रोमाणि ते नोत्पन्नानीति। सा तत्रमब्रवीत्- उपोपमेपरामृश मामेदभ्राणिमन्यथाः। सर्वाहमस्मिलोमशागन्धारीणामिवाविका ' इति । तद्रोमशमूधः, संहथः लोडर्थे लट्। संहतं संश्लिष्टं कुरुतम्। किञ्च—देवेषु दुवः परिचरणं कृणुतः कुरुतम् देवान् परिचरतमित्यर्थः ॥

[सू—11.] अन्योर्वैनावभियन्त्रयेत [ इति अनाकुलवृत्त्यां पाठभेदोदृश्यते ] वृत्तिः—ब्राह्मणः एनौ जायापती संगमिष्यन्तौ अनुवाकशेषेणअभिमन्त्रयेत ॥ इति

[सू—12.] यदा मलवद्वासास्स्यात् अथैनां ब्राह्मणप्रातिषिद्धानि कर्माणि संशास्ति यां मलवद्वाससमित्येतानि ।

[सू—13.] रजसः प्रादुर्भावात्; स्नातामृतुसमावेशनउत्तराभिरभिमन्त्रयतें ।

## बोधायनगृह्ये उपसंवेशने जपः ।

*Rik.* 15. प्रजापतिः स्त्रियां यशः, मुष्कयोरदधात् सपम् । कामस्य तृप्तिमानन्दम् । तस्याग्ने भाजयेहमा ।

**व्याख्या**—योऽयं प्रजापतिः जगतः स्रष्टा स्त्रियां यशः भार्यायां गर्भरूपेण यशसः कारणं यद्वीर्यं तत् मुष्कयोरण्डयोः सपं सम्बन्धं अदधात् स्थापितवान् । तस्यैव स्थापितस्य विशेषणानि कामस्य तृप्तिं तृप्तिकारणम् । तस्मिन् गलिते सति योषिन्मे भूयादिति कामः निवर्तते । तन्निवृत्तिरेव तृप्तिः । अत एव आनन्दं सुखकारणम् । हे अग्ने इह विवाहेकर्मणि मां तस्य वीर्यस्य सुखं भाजय प्रापय ।

*Rik. 16.* मोदः प्रमोद आनन्दः मुष्कयोर्निहित स्सपः सृत्वेव कामस्य तृप्याणि , दक्षिणानां प्रतिग्रहे ।

**व्याख्या**—मोदादयः त्रयः तारतम्येनावस्थिताः सुखावान्तर-विशेषाः वार्ताजन्यः सुखविशेषो मोदः । दर्शनजन्यः प्रमोदः । भोगजन्य आनन्दः । तेषां सर्वेषां सपः समवायहेतुः मुष्कयोर्निहितः स्थापितः । दक्षिणानां प्रतिग्रहे सति कामस्य सृत्वेव कामितार्थं प्राप्येव तृप्याणि तृप्तो भवानि । अयमर्थः, ऋत्विजां दक्षिणाकाले कन्यापि दीयते । अत एव आपस्तम्बधर्मेषु स्मर्यते । "दैवे यज्ञतन्त्र ऋत्विजे कन्यां समर्पयेत्; आश्वलायनोऽपि दक्षिणारूपायाः कन्यायाः अभिमर्शनं विधत्ते—" अभिमृशे दप्राणि कन्यां च " इति । तस्माद्दक्षिणानां प्रतिग्रहे सति प्राप्तस्य यादृशी तृप्तिः तादृशी तृप्तिर्भवतीति ।

*Rik. 17.* मनसश्चित्तमाकूतिम् । वाच स्सत्यमशीमहि, पशूनां रूपमन्नस्य । यशः श्रीः श्रयतां मयि.

*Rik. 18.* यथाहमस्या अतृपं स्त्रियै पुमान् । यथा स्त्री तृप्यति पुंसिप्रिये प्रिया । एवं भगस्य तृप्याणि । यज्ञस्य काम्यः प्रियः ।

व्याख्या—अस्यै स्त्रियाः अस्यां विवाहेन लब्धायां स्त्रियां पुमानहं यथा अतृपं येन प्रकारेण तृप्तोऽस्मि, यथा च प्रिया स्त्री प्रिये

पुंसि तृप्यति, एवमहं भगस्य तृप्याणि सौभाग्येन तृप्तो भवानि । कीदृशोऽहम् । यज्ञस्य काम्यः यज्ञो हि स्वानुष्ठानाय मां कामयते अत एव यज्ञस्याऽहंप्रियः ।

*Rik. 19.* ददामीत्यग्निर्वदति । तथेति वायुराहतत् । हन्तेति सत्यं चन्द्रमाः । आदित्य स्सत्यमोमिति ।

*Rik. 20.* आपस्तत्सत्यमाभरन् । यशो यज्ञस्य दक्षिणाम् । असौ मे कामः समृद्धयताम् ।

व्याख्या—यज्ञस्य दक्षिणां यज्ञसम्बन्धि दक्षिणारूपं यशो यशसः कारणं तत्कन्यारूपं वस्तु आपः सत्यमाभरन् अब्देवताः अवश्यमानयन् तस्मादसौ पुत्रोत्पादनरूपः कामः समृद्धयतां समृद्धो भवतु ॥



## गृह्यसूत्राणि

### आश्वलायनः

## अध्यायः I.

## कण्डिका 7.

[सू—1.] अथखल्लूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान् विवाहे प्रतीयात ॥

[सू—2.] यत्तु समानं तद्वक्ष्यामः ॥

**व्याख्या**—गार्ग्यनारयणः। किमर्थमिदम्? यथा अन्यान्युपदेशा देव अन्यत्र भवन्ति पार्वणादीनि तथा इदमपिस्यात्, नियमार्थं तर्हि जनपदादि धर्माणां वक्ष्यमाणधर्माणां च विराधे सति वक्ष्वमाणमेव धर्मं कुर्यात्। जनपदादिधर्ममिति यद्वक्ष्यामस्तत्सर्वत्र समानमेवेत्यर्थः। वैदेहेषु सद्य एव व्यवायो दृष्टः, गृह्ये तु 'ब्रह्मचारिणौत्रिरात्रम्' इति ब्रह्मचर्यं विहितम्, तत्र गृह्योक्तमेव कुर्यात् न देशधर्ममिति सिद्धम् ॥

[सू—3-6.] पश्चादग्नेः दृषदमश्मानं प्रतिष्ठाप्योत्तरपुरस्तदुदकुंभं, समन्वारब्धायां हुत्वा तिष्ठन् प्रत्यङ्मुखः प्राङ्मुख्या आसीनाया ' गृभ्णामिते सौभगत्वायहस्तम् ' इत्यङ्गुष्ठमेव गृह्णीयात् यदिकामयीत पुमांस एव मे पुत्राजायेरन्निति ॥ अङ्गुलीरेव स्त्रीकामः ॥ रोमान्ते हस्तं साङ्गुष्ठमुभयकामः ॥

[सू—6.] प्रदक्षिणमग्निमुदकुंभं च त्रिः परिणयन् जपति । ' अमोहमस्मि सा त्वं सात्वमस्यमोहं द्यौरहं पृथिवीत्वं सामाहमृक्त्वं तावेह विवाहावहै प्रजां प्रजनयावहै संप्रियौ रोचिष्णू सुमनस्यमानौ जीवेव शरद श्शतम् ' इति ॥

[सू—7.] परिणीय परिणीयऽश्मानमारोहयाति । ' इममश्मानमारोह अश्मेव त्वं स्थिरा भव सहस्व पृतनायतोऽभितिष्ठ पृतन्यतः ' इति॥

[सू—8.] वध्वञ्जलावुपस्तीर्य भ्राता भ्रातृस्थानो वा द्विः लांजानावपति ॥

[सू—9-12.] त्रिर्जामदग्न्यानाम् । प्रत्यभिघार्य हविः । अवत्तंच । एषोऽवदानधर्मः ॥

[सू—13] ' अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा । वरुणं नु देवं कन्या अग्निमयक्षत स इमां देवो वरुणः प्रेतो मुञ्चातु नामुतः स्वाहा । पूषणं नु देवं

कन्या अग्निमयक्षत स इमां देवः पूषा प्रेतो मुंचातु नामुतः स्वाहा" इत्यविच्छिन्दत्यञ्जलिं स्रुचेवज्जुहुयात् ॥

[सू—14.] अपरिणीय शूर्पपुटेनाभ्यात्मं तूष्णीं चतुर्थम् ॥

[सू—15.] ओप्योप्य हैके लाजान् परिणयन्ति तथोत्तमे आहुती न सन्निपततः

[सू—16-19.] अथाऽस्यै शिखे विमुञ्चति यदि कृते भवतः ॥ ऊर्णास्तुके केशपक्षयोः बद्धेभवतः । 'प्रत्वामुञ्चामिवरुणस्यपाशात्' इति ॥ उत्तरामुत्तरया ॥

[सू—18] अथैनामपराजितायां दिशि सप्तपदान्यभ्युत्क्रामयतीष एकपद्यूर्जेद्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपद्यृतुभ्य षट्पदी सखा सप्तपदी भव सा मा मनुव्रता भव पुत्रान् विन्दावहै बहूंस्ते सन्तु जरदष्टय इति ॥

[सू—20.] उभयोः संनिधाय शिरसी उदकुम्भेना ऽवसिच्य ॥

[सू—21.] ब्राह्मण्याश्च वृद्धाया जीवपन्त्या जीवप्रजाया अगार एतां रात्रिं वसेत् ॥

[गा—वृ] ग्रामान्तरगमने यद्यन्तरा वसतिः स्यात्तदा एवं गुणयुक्ताया

ब्राह्मण्या गृहेऽनन्तरां रात्रिं वसेत् । वसतिं कुर्यादित्यर्थः स्वग्रामे विवाहश्चेन्नायं विधिः ॥

सू—22. ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत "जीवपत्नीं प्रजां विन्देय" इति ॥

---

## कण्डिका 8

[सू—1.] प्रयाण उपपद्यमाने "पूषात्वेतो नयतु हस्तगृह्य" इति यानमारोहेत् ॥

[सू—2-3.] "अश्मन्वतीरीयते संरभध्वम्" इत्यर्द्धर्चेन नावमारोहयेत् उत्तरेणोत्क्रमयेत् ॥

[स—4-5.] "जीवंरुदन्ति" इति रुदत्याम् । विवाहाग्निमग्रतोऽजस्रं नयन्ति ॥

[सू—6.] कल्याणेषु देशवृक्षचतुष्पथेषु "माविदन् परिपन्थिन" इति जपेत् ।

[सू—7.] वासे वासे "सुमङ्गलीरियं वधू" रिति ईक्षकानीक्षेत ।

[सू—8.] "इह प्रियं प्रजया ते समृद्ध्यताम्" इति गृहं प्रवेशयेत् ॥

[सू—9.] विवाहाग्निमुपसमाधाय पश्चादस्यानडुहं चर्मास्तीर्य प्राग्रीव-मुत्तरलोम तस्मिन्नुपविष्टायां समन्वारब्धायां "आनः प्रजां जनयतु प्रजापतिः" इति चतसृभिः प्रत्यृचं हुत्वा "समञ्जन्तुविश्वेदेवाः" इति दध्नः प्राश्य प्रतिप्रयच्छेदाज्यशेषेण वा अनक्तिहृदये ॥

[सू—10.] अक्षारलवणाशिनौ ब्रह्मचारिणावलङ्कुर्वाणाव श्शा-यिनौ स्याताम् ॥

विवाहमारभ्य एते नियमा भवन्त्युभयोः "हैडिंबिका राजमाषा माषामुद्गा मसूरिकाः। लङ्कयाढक्याश्च निष्पावास्तिलाद्याः क्षारसंज्ञिता॥" गृहप्रवेशनीयहोमात्प्रागपि नियमानामिष्टत्वाद्योगविभागः कृतः

[सू 11.] अत ऊर्ध्वं त्रिरात्रं द्वादशरात्रं वा ।

अतो गृहप्रवेशनीयहोमादूर्ध्वं त्रिरात्रं द्वादशरात्रंवा नियतौ-स्याताम् ॥

[सू—12.] संवत्सरं वैकऋषिर्जायत इति ॥

संवत्सरं वा नियतौ स्याताम् एकऋषिकल्पः पुत्रो जायत

इतिकृत्वा । अन्येत्वाहुः व्रतान्ते एकऋषिः संपद्यते पितृगोत्रं विहाय पतिगोत्रं भजत इत्यर्थः

[सू—13-15.] चरितव्रतः सूर्याविदे वधूवस्त्रं दद्यात् ॥ अन्नं ब्राह्मणेभ्यः ॥ अथस्वस्त्ययनंवाचयीत ॥

---

## कण्डिका 13.

[सू—1.] उपनिषदि गर्भलम्भनं पुंसवमनवलोभनं च ।

[गा—वृ] आम्नातमिति शेषः । एतानि कस्यांचिदुपनिषद्याम्नातानि । न केवलमेतानि किं तर्हि गर्भाधानादय आत्मज्ञानपर्यन्ता आम्नाताः । अस्मच्छाखायां सा न विद्यते । अतस्तत्कर्म कर्तव्यामित्युपदिश्यते ॥

तस्या उत्सन्तत्वाद्यदितां नाधीयात्तत एवं कुर्यादित्याह—

सू—2. यदिनाधीयात्तृतीये गर्भमासे तिष्येणोपोषितायाः सरूपवत्साया गोर्दधनि द्वौ द्वौ [तु] माषौ यवं च दाधि प्रसृतेन प्राशयेत् ॥

[गा— वृ] गर्भाधानमाचार्येणानुक्तामिति कृत्वा न कार्यमित्येके । अन्ये पुनः शौनकाद्युक्तमार्गेण कार्यमित्याहुः ॥

# आश्वलायनगृह्यकारिकाः

भट्टकुमारिलः

## विवाहप्रयोगः

20. अभ्युत्क्रमयतीशान्यां वधूं सप्तपदानिच ।
साचाभ्युत्क्रामयेत्पूर्वं दक्षिणं पादमात्मनः ॥

21. इष इत्यादिभिर्मन्त्रैः अनुषक्तैर्भत्रादिना ।
सप्तमे क्रामिते तत्स्थः शिरसी संनिधायच ॥

22. अंभःकुंभाभंसा ते च शिरसी अवसिश्चति ।
आज्येन स्विष्टकृद्धोमं कृत्वा शेषं समापयेत् ॥

23. होमादारभ्य यच्छेत्सा वाचं दृष्ट्वा ध्रुवादिकान् ।
जीवपत्नीति सा वाचं विसृजेच्च ततः परम् ॥

24. दम्पत्योरत आरभ्य गृहवेशीयहोमतः ।
ऊर्द्ध्वं त्रिरात्रमथवा द्वादशाहं भवेद्व्रतम् ॥

25. अब्दं वा क्षारलवणवर्जितं भोजनं भवेत् ।
अधश्चशयनं तद्वत्ब्रह्मचर्यं च वैभवेत् ॥

## इति विवाहहोमः

### गृहप्रवेशः.

1. विवाहानन्तरं गच्छेत्सभार्यः स्वस्य मान्दिरम् ।
यदि ग्रामान्तरे तत्स्यात् तच्च यानेन गम्यते ॥

8. इह प्रियमृचा भार्यां स्वस्य गेहे प्रवेशयेत् ।
उपलेपादिकं कृत्वा विवाहाग्निं समिध्यच ॥

9. प्राग्रीवमूर्ध्वलोमाग्नेः प्रत्यगानडुहाजिनम् ।
आज्यासादनपर्यन्त मन्वाधनादि पूर्ववत् ॥

10. चर्मण्यथोपविष्टायां समन्वारब्ध एव सन् ।
कुर्यादाघार पर्यन्तमिध्माधानादि पूर्ववत् ॥

11. ऋग्भि श्चतसृभिश्चानः प्रजामित्यादिभिस्त्वथ ।
पठन्नाज्याहुती हुत्वा स्वाहाकारमृगंततः ॥

12. समञ्जन्त्वनया प्राश्य दधितस्यै प्रयच्छति ।
सापि प्राश्नाति तत्तूर्ष्णिं अथ स्विष्टकृदादिकम् ॥

13. अथवाऽनक्ति हृदये एतयर्चाज्यशेषतः ।
वध्वाविवाहवेळायां यत्सापरिहिताम्बरम् ॥

14. सत्येनोत्तभितासूक्तं वेत्ति यः पाठतोऽर्थतः ।
तस्मै विप्राय तद्दद्यात् व्रतान्ते धौतमम्बरम् ॥

15. ब्राह्मणान् भोजयित्वैतान् ओंस्वस्तीत्यथ वाचयेत् ।
ओंस्वस्तीति प्रतिब्रूयु र्ब्राह्मणास्ते च पूजिताः ॥

16. स्वस्त्यादि वाचयित्वादौ स्त्रियं तामुपगच्छति ।
मुहूर्ते शोभने तस्या व्रीडा न स्याद्यथा तथा ॥

## कौषीतकिगृह्यसूत्रम् ॥

त्रिरात्रं ब्रह्मचर्यंश्चरेयाताम् । दध्योदनं भुञ्जीयातां पिबतं च तृप्णुतं चेति तृचेन । सायंप्रातर्वैवाहमग्निं परिचरेयाताम् अग्नये स्वाहा अग्नये स्विष्टकृते स्वाहेति । "पुमांसौ मित्रावरुणौ पुमांसा वश्विनावुभौ पुमानिन्द्रश्च सूर्यश्च पुमान्संवर्ततां मयि स्वाहा" इति पूर्वं गर्भकामा। दशरात्रमविप्रवासः ॥

## शाङ्खायनगृह्यसंग्रहः (वासुदेवः)

ततः पाणिग्रहणादारभ्य त्रिरात्रं मैथुनमकुर्वन्तौ भूमौ शयीयाताम् पिबतं च तृप्नुतं चावगच्छतमिति तृचेन दम्पती अपि दधि शुक्तं भुञ्जीयातां वरो मन्त्रजपेत ॥

सायंप्रातर्वैवाहमग्निं परिचरेयातामित्युक्तं तद्वक्ष्यामः अत्र स्तरणाघाराज्यभागाः पाक्षिकाः उपलेपनोल्लेखनाद्याघाराज्यभागान्तंकृत्वा, ततः अग्नये स्वाहा अग्नये स्विष्टकृते स्वाहेत्याज्यस्य हुत्वा ततो महाव्याहृतिभिः सर्वप्रायश्चित्तादि तन्त्रशेषं समापनीयमिति ॥

अथ वधूः क्षिप्रं गर्भकामा भवति, ततः " अग्नयेस्वाहा " इत्यस्यस्थाने " पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ पुमानिन्द्रश्च सूर्यश्च पुमान् संवर्तताम् मयिस्वाहा " इति हुत्वा द्वितीया सौविष्टकृती । ततः पाणिग्रहणादारभ्य वरेण दशरात्रं वियोगो न कर्तव्यः ।

## बौधायनः (Mysore Edition)

1. 6 59. अथ विवाहस्यारुन्दत्युपस्थानात्कृत्वा व्रतमुपैति

60. उभौ जायापती व्रतचारिणौ ब्रह्मचारिणौ भवतोऽधश्शयाते ।

61. तयोश्शय्यामन्तरेण उदुम्बरदण्डः गन्धानुलिप्तः वाससा सूत्रेण वा परिवीतस्तिष्ठत्यापक्वहोमात् ।

62. चतुर्थ्यां निशायां हुते पक्वहोमे व्रतं विसृज्य दण्डमुत्थापयति ।

63. 64. अथैनं वध्वै प्रयच्छति । तं वधूः प्रतिगृह्णाति ।

65. 66. अथैनं वराय प्रयच्छति । तं वरः प्रतिगृह्णाति ।

67. 68. अथैनं स्थूणादेशे निधायान्तिकेन प्रतिपद्यते। प्रसिद्धमुपसंवेशनम् ।

1. 6. 10. अथ श्रीमन्तमगारं सम्मृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं तल्पवन्तं साधिवासं दिक्षु सर्पिस्सूत्रेन्धनप्रद्योतितं उदकुम्भा दर्शोच्छिरसं प्रपाद्य तस्मिन्नेनां संवेश्यान्तिके जपति " उदीर्ष्वात " इति ।

अथैनामुपसंवेशयति " प्रजापतिस्स्त्रियां यश " इत्येतया ।

अथास्यास्स्तोकोतिं विवृणोति (स्तोकोतिर्योनिरित्यर्थः)।

सा यद्यश्रुकुर्यात् तां अनुमन्त्रयते " जीवां रुदन्ति " इति ।

1. 7. 11. ब्राह्मणेन ब्राह्मण्यामुत्पन्नः प्रागुपनयनाज्जात इत्यभिधीयते । उपनीतमात्रो व्रतानुचारी वेदानां किञ्चिदधीत्य ब्राह्मणः । एकां शाखामधीत्य श्रोत्रियः । अङ्गाध्याय्यनूचानः । कल्पाध्यायी ऋषिकल्पः । सूत्र प्रवचनाध्यायी भ्रूणः । चतुर्वेदादृषिः । अत ऊर्ध्वं देवः । अथ यदि कामयेत श्रोत्रियं जनयेयमित्या अरुन्धत्युपस्थानात्कृत्वा त्रिरात्रमक्षारलवणाशिनावधश्शायिनौ ब्रह्मचारिणावासाते । अहतानां च वाससां परिधानम् । सायंप्रातश्चालङ्करणम् । इष्वप्रतोदयोश्च धारणम् । उभौ कालावग्निपरिचर्यां च । चतुर्थ्यां पक्वहोम उपसंवेशनं च । अथ यदि कामयेतानूचानं जन येयमिति द्वादशरात्रमेतद्व्रतं चरेत् व्रतान्ते पक्वहोम उपसंवेशनं च । अथ यदि कामयेत ऋषिकल्पं जनयेयमिति मासं एतद्व्रतं चरेत् । व्रतान्ते पक्वहोम उपसंवेशनं च । अथ यदि कामयेत भ्रूणं जनयेयमिति चतुर्मासमेतद्व्रतं चरेत् । व्रतान्ते पक्वहोम उपसंवेशनं च । अथ यदि कामयेत ऋषिं जनयेयमिति षण्मासानेतद्व्रतं चरेत् । व्रतान्ते पक्वहोम उपसंवेशनं च । अथ

यदि कामयेत देवं जनयेयमिति संवत्सरमेतद्व्रतं चरेत् व्रतान्ते पक्व-होम उपसंवेशनं च ।

I- 7. 21, सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनः यद्या-दौ यच्चर्ताविति शालिकिः ।

## आपस्तम्बः ।

1. 3. 11, सुप्तां रुदन्तीं निष्क्रान्तां वरणे परिवर्जयेत् [

12. दत्तां गुप्तां द्योतां ऋषभां शरभां विनतां विकटां मुण्डां मण्डूषिकां साङ्कारिकां रातां पालीं मित्रां स्वनुजां वर्ष-कारीं च वर्जयेत् ।

**हरदत्ताचार्यः ।—राता,** राति शीला ॥ **वर्षकारी** वरजननादूर्ध्वमल्पीयसि काले जाता । तस्मिन्नेव संवत्सरे जातेत्यन्ये । वर्षेणाधिका वर्षकारी । स्वेदनशीले त्यन्ये ॥

**सुदर्शनाचार्यः—राता,** रमणशीला, कन्दुकादि क्रीडा-प्रियेत्यर्थः । ऋतुस्नाता वा । केचिद्राति शीला, विषयोपभोग-शीलेत्यर्थः । **वर्षकारी,** वराद्वर्षेणाधिका । केचिद्वरजन्म संवत्सर एव पश्चाज्जाता । यात्यन्तं स्रवति सा वा ॥

1. 3. 13. नक्षत्रनामा नदीनामा वृक्षनामाश्च गर्हिताः ।

1. 3. 14. सर्वाश्च रेफलकारोपान्ता वरणे परिवर्जयेत् ।

1. 3. 19. बन्धुशीललक्षणसम्पन्नामरोगामुपयच्छेत !

1. 3. 21. यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदाद्रियेतेत्येके ।

3. 8. 8. त्रिरात्रमुभयोरधः शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ।

3. 8. 9. तयोः शय्यामन्तरेण दण्डो गन्धलिप्तो वाससा सूत्रेण वा परिवीतस्तिष्ठति ।

3. 8. 10. तं चतुर्थ्यामपरारात्र उत्तराभ्यामुत्थाप्य प्रक्षाळ्य निधायाग्नेरुपसमाधानाद्याज्यभागान्तेऽन्वारब्धायामुत्तरा आहुतीर्हुत्वा जयादिप्रतिपद्यते परिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य तस्याः शिरस्याज्यशेषाद्व्याहृतिभिरोङ्कारचतुर्थाभिरानीयोत्तराभ्यां यथालिङ्गं मिथः समीक्ष्योत्तरयाऽऽज्यशेषेण हृदयदेशौ संमृज्योत्तरास्तिस्रो जपित्वा शेषं समावेशने जपेत् ।

हर—शेषमनुवाकशेषम् आरोहोरुमित्यादि, समागमनकाले जपेत् । समावेशनन्तु अस्मिन्नेव अपररात्रे नियमेन भवति । इदमेव समावेशनम्मन्त्रवत् नान्यानि ॥

**सुदर्शन**—शेषमनुवाकशेषं ‘ आरोहोरुम् ’ इत्यादिकं समावेशने समावेशनकाले जपेत् । समावेशनं च वध्वासह मैथुनार्थं शयनम् । ‘ ऋतुसमावेशने ’ ( आप. गृ. ७. १३. ) इत्यृतुलिङ्गात् । एतच्च रागप्राप्तसमावेशनाश्रितं विवाहकर्मार्थं क्रमजपयोर्विधानम् । यथा भोजनपर्यायव्रताश्रितं पयआदिविधानम् ॥ केचित् असत्यपि रागे कर्मार्थं मस्मिन् क्रमे समावेशनं नियतमेवेति ॥ समावेशनान्तरेषु तु अकर्मार्थत्वा देवनायं जपः । वोधायनेन विकल्पोऽभिहितः “ सर्वाण्युपगमनानि मन्त्रवन्ति भवन्तीति बोधायनो यच्चादौ यच्चर्ताविति शलीकिः ” इति । अस्मिन्नेव क्रमे यदि दैवादृतुगमनमपि कर्तव्यं स्यात्तदा पूर्वं “ आरोहोरुम् ” इत्यदि जपः । ततो “ विष्णुर्योनिम् ” इत्यादिभिरभिमन्त्रणम् ।

## हिरण्यकेशी ।

1\. I9. 2. समावृत्त आचार्यकुलात् मातापितरौ बिभृयात् ।

2\. ताभ्यामनुज्ञातः भार्यामुपयच्छेत् सजातां नग्निकां ब्रह्मचारिणीमसगोत्राम् ।

**व्याख्या । मातृदत्तः**—नग्निकामासन्नार्तवाम् । नग्नपतिरपि परिपठितो वस्त्रविक्षेपणार्थः । ततोर्हेण्वुक् (ण्वुच्) Pan. III—3,

111. कर्तरिच (Pan. 11—2—16) स्यात्कृतोबहुलं कृति । तस्माद्वस्त्रविक्षेपणार्हा नग्निका मैथुनार्हा इत्यर्थः ॥ ब्रह्मचारिणी मसंस्पृष्टमैथुनाम् ॥ 1. 7. 10. त्रिरात्रमक्षारलवणाशिनौ अधः शायिनौ अलङ्कुर्वाणौ ब्रह्मचारिणौ वसतः ।

11. चतुर्थ्यामपररात्रे अग्निमुपसमाधाय प्रायश्चित्तिपर्यन्तं कृत्वा नवप्रायश्चित्तीर्जुहोति ।

*   *   *   *

(3) अत्रैव उादपात्रं निधाय प्रदक्षिणमग्निं प्रक्रिम्य अपरेणाग्निं प्राचीमुदीचीं वा संवेश्य अथास्यै योनिमभिमृशाति (संवेश्य, शाययित्वा)

(4) अथैनामुपयच्छते (उपयच्छते अवाकिरते मिथुनीभवति)

(मन्त्रः) सं नाम्नः सं हृदयानि सं नाभिः सं त्वचः ।

सं त्वा कामस्य योक्रेण युञ्जान्यविमोचनाय ।

(5) अथैनां परिष्वजते ।

(मन्त्रः) मानुव्रता भव सहचर्या मया भव ।

या ते पतिघ्नी तनूर्जारघ्नीन्त्वेतां करोमि ।

शिवा त्वं मह्यमेधि क्षुरपविर्जारेभ्यः ॥ इति ॥

(6) अथास्यै मुखेन मुखमीप्सते ।

(मन्त्रः) मधुहे मध्विदम्मधु जिह्वामे मधुवादिनी ।

मुखेमे सारघं मधु दत्सु संवननं कृतम् ॥

चाक्रवाकं संवननं यन्नदीभ्यउदाहृतम् ।

यद्युक्तो देवगन्धर्वस्तेन संवनिनौ स्वके ॥

**मातृदत्तः**—ईप्सते, आप्तुमिच्छति, पो(चो)षयतीत्यर्थः । अथ शब्दः कर्मान्तरप्रतिषेधार्थे । क्षतयोनिर्हि, अत्यन्तस्वीकृता भवति, अक्षतयोन्याः पत्यु र्मरणोत्तरकालं पुनस्संस्कृत्य परिणेतव्येति स्मरणात् ॥

(7) त्रिरात्रं मलवद्वासा ब्राह्मण्याद्ध्यातानि व्रतानि चरति ।

(8) चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्रह्मणसम्भाषामाचम्योपहूयते ।

.... .... .... .... .... .... .... .... ....

सर्वाण्युपगमनानि मन्त्रवन्तीत्यात्रेयः ।

यच्चादौ यच्चर्ताविति बादरायणः ।



14. संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रं [त्रिरात्रमेकरात्रं] वा ।

15. अथास्यै गृहान्विसृजेत् । [गृहाधिकारं प्रयच्छेदित्यर्थः] ।

16. योक्त्रपाशं विषाय तौ सन्निपातयेत् । [योक्त्रपाशं वाससोऽन्ते य-
द्बद्धं तद्विमुच्य तौ दम्पती एकस्मिन् शयने सन्निपातयेत् इति
(सम्बध्यते) प्रत्येकमाभिसम्बध्येते । तदुपरि भार्यां पतिं च सन्नि-
पातयेत्सङ्क्रमयेत् स्वं स्वं प्रति] ।

जपमन्त्राः—अपश्यन्त्वा (1) अपश्यन्त्वा (2) प्रजापतिस्तन्वं (3)
अहंगर्भमदधाम् (4)

17. करदिति भसदाभिमृशति । [भसदिति गुह्यप्रदेशं[शः]पत्न्याः । ]

18. जननीत्युपजननम् । [उपजननं प्रजननम् । ]

19. बृहदिति जातं प्रतिष्ठितम् । (अभिमृशतीत्यनुवर्तते)

20. एतेन धर्मेण ऋतावृतौ सन्निपातयेत् ।

## वैखानसगृह्यसूत्रम् ।

तदेवं त्रिरात्रं हविष्याशिनौ ब्रह्मचारिणौ धौतवस्त्रौव्रतचारिणौ स्यातामृ । ततो ऽ परस्यां रात्रौ चतुर्थ्यां अलंकृत्याग्निमुपसन्धाय नव प्रायाश्चित्तानि जुहुयात् । .... .... ....

अग्निं प्रदक्षिणं कृत्वा प्राच्यामुदीच्यां वा तामुपवेश्य अभिष्ट्वा पञ्चशाखेनेति योनिमभिमृश्य संनाम्न इत्युपगच्छेत् । इमामनुव्रता इत्यालिंगिनीं मधुमान्मध्विदम् इति मैथुनं कुर्वीत ॥ सुप्रजास्त्वाय इत्युपगमनम् । संनाम्न इत्यालिंगनम् । इमामनुव्रतेति वधूमुखेक्षण-मित्येके ॥

## भारद्वाजगृह्यसूत्रम् ।

अथैनां तूष्णीं हिंकृत्य वाग्यत उपेत्य अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वं सामाहमृक् त्वं तावेहि सम्भवाव सह रेतो दधावहै पुँसे पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय .... .... इत्यथास्या अपवृत्तार्थोऽपुँवृत्तार्थाया मुखेन मुखं सन्निधाय प्राणिपत्यैतं प्राणमपानिहीति तं सा प्रत्यपानिति । अथास्या चान्तोदकायै पाणी प्रक्षाल्याभिमृशति । करं दधच्छिवेन त्वा पंचशाखेन हस्तेनाऽविद्वि-षावता सहस्रेण यशस्विनाभिमृशामिसुप्रजास्त्वायेति भसद्देशम् । यदा मलद्वासाः स्यादथैनां ब्राह्मण प्रतिषिद्धानि व्रतानि संशास्ति । यां मलवद्वाससामिति । चतुर्थ्यां स्नातां प्रयतवस्त्रां ब्राह्मणसम्भाषां

स्न्ते मनसा मन इत्येतेनानुवाकेनोपसंविशाति । सर्वाण्युपायनानि मन्त्रवन्ति भवन्तीत्याश्मरथ्यो यच्चादौ यच्चर्ताविल्यालेखनः ।

## कात्यायनः ।

अक्षारलवणाशिनौ स्यातामध श्शयीयातां संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रं वा ।

## पारस्करः ।

I. 4. 5. उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात् ।

I. 8. 1. अथैनामुदीचींसप्तपदानि प्रक्रामयति ।

5. तत एनां मूर्द्धन्याभिषिञ्चति ।

7. अथैनाँ सूर्यमुदीक्षयति ।

8. अथास्यै दक्षिणांसमधिहृदयमालभते ।

10. तां दृढपुरुष उन्मथ्य प्राग्वोदग्वानुगुप्तागारे आनडुहेरोहिते चर्मण्युपवेशयाति ।

11. ग्रामवचनं च कुर्युः ।

19. अस्तमिते ध्रुवं दर्शयाति ।

21. त्रिरात्रमक्षारलवणाशिनौ स्यातामधः शयीयातां संवत्सरं न मिथुनमुपेयातां द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः

**हरिहरभाष्यम्** — संवत्सरादिपक्षाशक्तौ त्रिरात्रपक्षाश्रयेणापि चतुर्थीकर्मानन्तरं पंचम्यादिरात्रावभिगमनम् । चतर्थीकर्मणःप्राक् तस्या भार्यात्वमेव न संवृत्तं विवाहैकदेशत्वाच्चतुर्थीकर्मणः ॥

1. 11. 7. तामुदुह्ययथर्तुप्रवेशनम् ।

8. यथाकामी वा काममाविजनितो स्सम्भवामेति वचनात् ।

## जैमिनिः ।

20, 1. स्नात्वा मातापितरौ परिचरेत् । तदधीनः स्यात् । ताभ्यामनु ज्ञातो जायां विन्देतानग्निकां समानजातीयामसगोत्रां मातु रसपिण्डाम् ।

20, 6. त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ अधःसंवेशनौ असंवर्त मानौ सहशयाताम् ।

20, 7. ऊर्ध्वं त्रिरात्रत् सम्भवः ।

श्रीनिवा साध्वरीन्द्रः। **व्याख्या**—त्रिरात्रादूर्ध्वं सन्निहिते पुण्यदिने

सम्भवः संयोगः स्यात् । चतुर्थस्याह्नः अपुण्यत्वे यावत्पुण्यदिनं अपरिष्वजन्तौ सह शयातामेव ।

20, 8. निशायां जायापति कर्मण्यम् ।

20, 9. प्रायश्चित्तीर्जुहुयात् ।

20, 10. स्थालीपाकादग्निं प्रजापतिंचेष्ट्वा संपातांश्चमस आनीय स्रोतांस्यङ्क्ष्वेत्येतां ब्रूयात् ।

**व्याख्या**—भार्याहस्ते दत्वा सनाभिनवरन्धाणि समालिम्पेति तां ब्रूयात् ।

20, 11–13. नाभिं प्रथमम् । ततो यान्यूर्ध्वम् । ततोयान्यर्वाञ्चि ।

20, 14. ऊर्ध्वमर्धरात्रात्संवेशनं विष्णुर्योनिं कल्पयतु इत्येतेन तृचेन ।

**व्याख्या**—संवेशनं मैथुनं तृचस्यान्ते संयोगः

20, 16. ऋतावृतावेवमेव ।

## गोभिलः ।

3, 4, 6. नग्निका तु श्रेष्ठा ।

2, 3, 15. तावुभौ तत्प्रभृति त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सहशयाताम् ।

2, 5, 7. ऊर्ध्वं त्रिरात्रत्सम्भव इत्येके ।

चन्द्रकान्ततर्कालंकारः **व्याख्या**—प्रकृतात् त्रिरात्रादूर्ध्वं परतः सम्भवत्यनेनेति सम्भवः सम्योगः व्यवायः कर्तव्यः । इत्येके आचार्या मन्यन्ते । अथ सूत्रमिदं शक्यमवक्तुं सम्भवस्य रागत एव प्राप्तेः विवाहात्प्रभृति त्रिरात्रं ब्रह्मचर्यविधानाच्च तदूर्ध्वं ब्रह्मचर्यनियमाभावस्यावगतेः । उच्यते । उपरिष्टात् स्नातकव्रतेषु सूचयिष्यति "नाजातलोम्न्या सहोपहासमिच्छेत्" इति । तदपवादार्थमिदमुच्यते । कथं नाम । यद्यजातलोम्नयेवातीव पुरुषोपभोगाभिलाषिणी भवति तर्हि त्रिरात्रादूर्ध्वं तद्रक्षार्थं सम्भवितव्यम् । अपि च ऋतुकालादन्यत्र रागमात्राधीनत्वात्सम्भवस्य स्त्रीणां तदभिलाषेऽपि पुंसो रागाभावात् अकरणमपि प्राप्नोति तदनेन निरस्यते । अन्यथा खलु अभिलाषपरवशा कदाचिदकार्यमपि कुर्यात् । तस्माद्विनापि ऋतुकालं स्त्रीणां रक्षार्थं सम्भवितव्यमिति ।

—(*)—

# स्मृतयः ।

## बोधायनस्मृतिः ।



( चतुर्थःप्रश्नः प्रथमोऽध्यायः )

12. दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥

13. त्रीणि वर्षाण्यृतुमतीं यः कन्यां न प्रयच्छति ।
स तुल्यं भ्रूणहत्यायै दोषमृच्छत्यसंशयम् ॥

14. न याचते चेदेवं स्यात् याचते चेत्पृथक् पृथक् ।
एकैकस्मिन्नृतौ दोषं पातकं मनुरब्रवीत् ॥

15. त्रीणि वर्षाण्यृतुमती कांक्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम् ॥

अविद्यमाने सदृशे गुणहीनमपि श्रयेत् ।

# गौतमस्मृतिः ।

## अष्टादशोऽध्यायः ।

त्रीन् कुमार्यृतूनतीत्य स्वयं यु [ञ्जी] ज्येतानिन्दितेनोत्सृज्य पित्र्यानलङ्कारान् ॥20॥ प्रदानं प्रागृतोः ॥21॥ अप्रयच्छन् दोषी ॥22॥ प्राग्वासः प्रतिपत्तेरित्येके ॥ 23 ॥

# वसिष्ठस्मृतिः ।

## अष्टमोऽध्यायः ।

गृहस्थो विनीतक्रोधहर्षो गुरुणा अनुज्ञातः स्नात्वा असमानार्षी अस्पृष्टमैथुनां यवीयसीं सदृशीं भार्यां विन्देत । .... .... ....

## सप्तमोऽध्यायः ।

60 कुमार्यृतुमती त्रीणि वर्षाण्युपासीत ऊर्द्ध्व त्रिभ्यो वर्षेभ्यो विन्देत् तुल्यं पतिम् ॥

(अत्राप्युदाहरन्ति)

61 पितुः पमादात्तु यदीह कन्या वयःप्रमाणं समतीत्य दीयते ।
सा हन्ति दातारमदीयमाना कालातिरिक्ता गुरुदक्षिणेव ॥

62 प्रयच्छेन्नग्निकां कन्या मृतुकालभयात्पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति ॥

यावच्च कन्यामृतवस्स्पृशन्ति
तुल्यैः सकामामभियाच्यमानाम् ।
भ्रूणानि तावन्ति हतानि ताभ्यां
मातापितृभ्यामिति धर्मवादः ॥ ६३ ॥

अद्भि र्वाचा च दत्तायां म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥ ६४ ॥

बलाच्चेत्प्रहृता कन्या मन्त्रै र्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ ६५ ॥

पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता ।
साचे दक्षतयोनिस्स्यात् पुनस्संस्कारमर्हति ॥ ६६ ॥ इति ॥

## मनुस्मृतिः ।

### त्रितीयोऽध्यायः ।

असपिण्डा च या मातुः असगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी [मैथुने] ॥ ५ ॥

महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।
स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥ ६ ॥

हीनाक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानिच ॥ ७ ॥

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोमां न वाचाटां न पिङ्गलाम् ॥ ८ ॥

नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥ ९ ॥

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥ १० ॥

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥ ११ ॥

नवमोऽध्यायः ।

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः ।
मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥ ४ ॥

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥ ७२ ॥

उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥ ८८ ॥

काममामरणात्तिष्ठेत् गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ८९ ॥

त्रीणिवर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
ऊर्ध्वं तु कालादेतस्मात् विन्देत सदृशं पतिम् ॥ ९० ॥

अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किं चिदवाप्नोति न च यं साधिगच्छति ॥ ९१ ॥

अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा ।
मातृकं भ्रातृदत्तंवा स्तेनास्याद्यदितं हरेत् ॥ ९२ ॥

पित्रे न दद्यात् शुल्कं तु कन्यामृतुमतीं हरन् ।
सहि स्वाम्यादतिक्रामे दतूनां प्रतिरोधनात् ॥ ९३ ॥

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदाति सत्वरः ॥ ९४ ॥

देवदत्तां पतिं भार्यां विन्दते नेच्छयात्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥ ९५ ॥

अष्टमोऽध्यायः ।

यस्तुदोषवतीं कन्या मनाख्याय प्रयच्छाति ।
तस्य कुर्या न्नृपो दण्डं स्वयं षण्णवतिं पणान् ॥ २२४ ॥

अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः ।
स शतं प्राप्नुयाद्दण्डं तस्या दोषमदर्शयन् ॥ २२५ ॥

पाणिग्रहणिकामन्त्राः कन्यास्वेव प्रतिष्ठिताः ।
नाकन्यासु क्वचिन्नॄणां लुप्तधर्मक्रिया हि ताः ॥ १२२ ॥

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमेपदे ॥ २२७ ॥

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामां दूषयं स्तुल्यो न वधं प्राप्नुयान्नरः ॥ ३६४ ॥

कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत् ।
जघन्यं सेवमानां तु संयतां वासयेद्गृहे ॥ ६६५ ॥

उत्तमां सेवमानस्तु जघन्यो वधमर्हति ।
शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि ॥ ३६६ ॥

अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः ।
तस्याशुकर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥ ३६७ ॥

सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् ।
द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥ ३६८ ॥

कन्यैव कन्यां या कुर्यात् तस्याःस्याद्द्विशतो दमः ।
शुल्कं च द्विगुणं दद्यात् शिफाश्चैवाप्नुयाद्दश ॥ ३६९ ॥

या तु कन्यां प्रकुर्यात् स्त्री सा सद्योमौण्ड्यमर्हति ।
अङ्गुल्योरेव वा च्छेदं खरेणोद्वहनंतथा ॥ ३७० ॥

## विष्णुस्मृतिः

### चतुर्विंशोऽध्यायः ।

ऋतुत्रयमुपास्यैव कन्या कुर्यात् स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा ॥

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
साकन्या वृषली ज्ञेया हरंस्तां न विदुष्यति ॥

## नारदस्मृतिः

कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत् ।
ते चेन्नदद्युस्तां भर्त्रे ते स्युः भ्रूणहभिः समाः ॥

यावन्तश्चर्तवस्तस्याः समतीयुः पतिं विना ।
तावत्यो भ्रूणहत्याः स्युः तस्य यो न ददाति ताम् ॥

अतः [अतोऽ] प्रवृत्ते रजसि कन्यां दद्यात्पिता सकृत् ।
महदेनः स्पृशेदेनं अन्यथैवं विधिः सताम् ॥

दीर्घकुत्सितरोगार्ता व्यङ्गा संस्पृष्टमैथुना ।
दु [धृ] ष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः ॥

कन्यायामसकामायां द्वयङ्गलस्यावकर्तनम् ।
उत्तमायां वधस्त्वेव सर्वसंग्रहणं तथा ॥

सकामायां तु कन्यायां सङ्गमे नास्त्यतिक्रमः ।
किन्त्वलङ्कृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥

# याज्ञवल्क्यस्मृतिः

## प्रथमोऽध्यायः ।

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ ५२ ॥

अरोगिणीं भ्रातृमती मसमानार्षगोत्रजाम् ।
पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥ ५३ ॥

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ ६३ ॥

अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यन्त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् ॥ ३४ ॥

## वेदव्यासस्मृतिः ।

### द्वितीयोऽध्यायः ।

अरोगदुष्टवंशोत्थामशुल्कादानदूषिताम् ।
सवर्णामसमानार्षाममातृपितृगोत्रजाम् ॥ २ ॥
अनन्यदत्तवागाप्तां शुभलक्षणसंयुताम् ।
धृताधोवसनां गौरीं विख्यातदशपूरुषाम् ॥ ३ ॥
ख्यातनाम्नः पुत्रवतः सदाचारवतस्ततः ।
दातुमिच्छोर्दुहितरं प्राप्यधर्मेण चोद्वहेत् ॥ ४ ॥
यदि सा दातृवैकल्याद्रजः पश्येत्कुमारिका ।
भ्रूणहत्याश्च यावत्यः पतितः स्यात्तदप्रदः ॥ ५ ॥

## शङ्खस्मृतिः ।

### पञ्चदशोऽध्यायः ।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
तस्यां मृतायां नाशौचं कदाचिदपिशाम्याति ॥ ७ ॥

## लघुशातातपस्मृतिः ।

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितु स्तस्याः सा कन्या वृषली स्मृता ॥ ३३ ॥

## लघ्वाश्वलायनस्मृतिः ।

विवाहप्रकरणम् 15.

दम्पती नियमेनैव ब्रह्मचर्यव्रतेन तु ।
वैवाहिकगृहे तौ च निवसेतां चतुर्दिनम् ॥ ६२ ॥

निन्धप्रकरणं 21.

5. रजस्वला च या कन्या यदि स्यादविवाहिता ।
वृषली वार्षलेयः स्यात् जातस्तस्यां स चैवहि ॥

## प्रजापतिस्मृतिः

85. पितुर्गृहे तु या कान्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पति र्वृषलीपतिः ॥

86. महिषीत्युच्यते भार्या साचैव व्यभिचारिणी ।
तान्दोषान् क्षमते यस्तु स वै माहिषिकः स्मृतः ॥

## अङ्गिर स्स्मृतिः

62. पितु र्वेश्मनि या कन्या रजस्तु समुपस्पृशेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

27. माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

28. उद्वहेद्यस्तु तां कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

## वृहद्यमस्मृतिः ।

### तृतीयोऽध्यायः ।

18. पितुर्गृहे तु या कन्या पश्यत्यसंस्कृता रजः
भ्रूणहत्या पितुस्तस्याः कन्या सा वृषली स्मृता ॥

19. यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ।

20. प्राप्ते द्वादशमे वर्षे कन्यां यो न प्रयच्छति ।
मासि मासि रजः तस्याः पिता पिबति शोणितम् ॥

21. अष्टवर्षा भवेद्गौरी नववर्षातु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

22. माता चैव पिता चैव ज्येष्ठभ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

# पाराशरसंहिता ।

## सप्तमोऽध्यायः ।

अष्टवर्षा भवेत् गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

प्राप्ते तु द्वादशे वर्षे यःकन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबन्ति पितरःस्वयम् ॥

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रय स्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

यस्तां समुद्वहेत्कन्यां ब्राह्मणोऽज्ञानमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

# संवर्तस्मृतिः ।

64. रोमकाले तु संप्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम् ।
रजो दृष्ट्वा तु गन्धर्वः कुचौ दृष्ट्वा तु पावकः ॥

65. अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

66. माता चैव पिता चैव ज्येष्ठो भ्राता तथैवच ।
त्रय स्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥

67. तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत् ।
विवाहोह्यष्टवर्षीयाः कन्यायास्तु प्रशस्यते ॥

## लघ्वत्रिसंहिता ।

### पञ्चमोऽध्यायः ।

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
हविष्मत्या स्नापयित्वा अन्यवस्त्रै रलङ्कृताम् ।
युञ्जाना माहुर्तिं कृत्वा ततः कर्म प्रवर्तते ॥

## आपस्तम्बस्मृतिः ।

### सप्तमोऽध्यायः ।

विवाहे वितते यज्ञे संस्कारे च कृते यदा ।
रजस्वला भवे त्कन्या संस्कारस्तु कथं भवेत् ॥ ९ ॥

स्नापयित्वा तदा कन्यां अन्यै र्वस्त्रैरलङ्कृताम्
पुनर्मेध्याहुतिं हुत्वा शेषं कर्म समाचरेत् ॥ १० ॥

## अत्रिस्मृतिः ॥

### पञ्चमोऽध्यायः ।

पूर्वं स्त्रियः सुरै र्भुक्ताः सोमगन्धर्ववह्निभिः ।
भुज्यन्ते मानुषैः पश्चात् नैता दुष्यन्ति कर्हिचित् ॥ ५ ॥

व्यञ्जनेषु च जातेषु सोमो भुङ्क्ते च कन्यकाम् ।
पयोधरेषु गन्धर्वो रजस्यग्निः प्रतिष्ठितः ॥ ९ ॥

## अत्रिसंहिता ।

पूर्वं स्त्रियः सुरै र्भुक्ता स्सोमगन्धर्ववह्निभिः ।
भुञ्जते मानवाः पश्चात् न ता दुष्यन्ति कर्हिचित ॥ १९८ ॥

## गोभिलस्मृतिः ।

### विभागः 3.

अजातव्यञ्जनाऽलोम्नी न तया सह संविशेत् ।
अयुगूः काकवन्ध्यायां जाता ता न विवाहयेत् ॥ १३६ ॥

## वृद्धगौतमसंहिता ।

### पञ्चमोऽध्यायः ।

कन्या चाक्षतयोनिः स्यात् कुलीना पितृमातृतः ।
ब्राह्मादिषु विवाहेषु परिणीता यथाविधि ॥

# लघुविष्णुस्मृतिः ।

## प्रथमोऽध्यायः ।

अनेन विधिना सम्यक् कृत्वा वेदमधीत्य च ।
गृहस्थधर्म माकाङ्क्षन् गुरुगेहा दुपागतः ॥ २५ ॥

अनेनैव विधानेन कुर्या द्दारपरिग्रहम् ।
कुले महति संभूतां सवर्णां लक्षणान्विताम् ॥ २६ ॥

परिणीय तु षण्मासान् वत्सरं वा न संविशेत् ।
औदुम्बरायणो नाम ब्रह्मचारी गृहे गृहे ॥ २७ ॥

---

# निबन्धनादीनि

## I. पराशरमाधवीयम् ।

### *a* उपोद्घातकारिकाः ।

पराशरस्मृता वस्यां ग्रन्थकॢप्ति र्विविच्यते ।
द्वे काण्डे, द्वादशाध्यायाः, श्लोका अष्टोनषट्शतम् ।
आचारस्यादिमः काण्डः प्रायश्चित्तस्य चान्तिमः ।
इष्टप्राप्ति रनिष्टस्य निवृत्ति श्चानयोः क्रमात् ।
"एते सर्वे पुण्यलोका भवन्ती"ति श्रुतिर्जगौ ।
विहितादाश्रमाचारादिष्टाप्तिं पारलौकिकीम् ।
प्रसक्तो नरकोऽनिष्टो निषिद्धाचरणेन यः ।
तन्निवृत्तिः स्फुटा शास्त्रे प्रायश्चित्ताभिधायिनि ।
परलोकप्रधानस्य धर्मस्यैषा द्वयीगतिः ।
प्रायश्चित्तं तथाऽऽचारः श्रौतधर्मे तथेक्षणात् ।
आचारतश्चतुर्वर्णधर्मौ साधारणापरौ ।
शिष्टाचाराह्निके तत्र धर्मौ साधारणौ मतौ ।
षट्कर्मक्षितिरक्षाद्या वर्णासाधारणाः स्मृताः ।

आचारे प्रथमाध्याये एतेऽर्थाः परिकीर्तिताः ।
कृष्यादि जीवनोपायो द्वितीयेऽध्याय ईरितः ।
चतुराश्रमधर्माश्च सूचिता आश्रमोक्तितः ।
उक्तौ तृतीय आशौचविस्तरश्राद्धसंग्रहौ ।
अध्यायत्रयगा अर्थाः प्रोक्ताः आचारकाण्डगाः ।
तुर्ये प्रकीर्णपापस्य प्रायश्चित्तं प्रपञ्चितम् ।
प्रसंगात् पुत्रभेदादि प्रोक्तश्च परिवेदनम् ।
प्रकीर्णशेष स्संस्कार आहिताग्नेश्च पञ्चमे ।
मलावहे च सङ्कीर्णे तथाचैवोपपातके ।
प्रायश्चित्तं षष्ठ उक्तं शुद्धिश्चाग्नेरसेऽपि च ।
अवशिष्टद्रव्यशुद्धि स्सप्तमाध्याय ईरिता ।
प्रायश्चित्तं गोवधे च सामान्येनाष्टमे स्मृतम् ।
रोधनादि विशेषेण नवमे तदुदीरितम् ।
अगम्यागमने प्रायश्चित्तं दशम ईरितम्
अभोज्यभोजनादौ तदेकाश उदीरितम् ।
द्वादशः परिशेष स्स्यात् काण्डयो रुभयो स्तयोः
सचान्येषा मनुक्ताना मुपलक्षण मीक्ष्यताम् ।
अनुपातकमुख्येषु प्रायश्चित्तं क्वचित् क्वचित् ।
नोक्तं, तथा रहस्यं च प्रायश्चित्तं च वर्णितम् ।

नापि पर्णादिकृच्छ्राणि नोदितान्यत्र कानि चित् ।
नोक्तः कर्मविपाकश्च तत्सर्वं मुपलक्षितम् ।
इत्थं नवभि रध्यायैः प्रायश्चित्तं प्रपञ्चितम् ।
कालिं प्राति प्रवृत्तत्वात् प्रायाश्चित्तं प्रपाञ्चितम् ।
कलौ हि पापबाहुल्यं दृश्यते स्मर्यतेऽपिच ।
नराः प्रायोऽल्पसामर्थ्याः तेषामनुजिघृक्षया ।
समकोचय दाचारं प्रायाश्चित्तं व्रतानि च ।
तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः
इत्युक्ति मादावन्ते च प्रायुङ्क्तैषा कृपालुता ।
वेदैकदेशाऽध्ययनं कृष्या विप्रादिजीवनम् ।
इत्यादि वचसाचारे संकोचो भासते स्फुटम् ।
प्राजापत्यं गोवधे स्यात् ब्रह्मघ्ने सेतुदर्शनम् ।
इति मुख्यव्रतत्वोक्तेः संकोचोऽत्रापि गम्यते ।
स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिः ।
कल्पनीयेति चेत् ब्रूहि सर्वज्ञंमन्य साधकम् ।
यावत्यः स्मृतयस्तासां सर्वासा मनुसारतः ।
साकल्याचे दस्मदादेः तत्र शक्ति र्नविद्यते ।
स्वेन दृष्टास्तु यावत्यः तासामि त्यप्ययुक्तिमत् ।

क्वचित् कदाचिद न्यासां दर्शना दव्यवस्थितेः ।
अल्पिका मानुषी बुद्धिः तावन्न व्यवतिष्ठते ।
अत एव निवन्धेषु दृश्यते नैकवाक्यता ।
हन्तैवं खण्डने शास्त्रं भवे द्दत्तजलाञ्जलि ।
न खण्डये वारये तु पाण्डितंमन्यतां तव ।
श्रृणु निर्णय मत्र त्वं स्वतः प्रामाण्यवादिनः ।
प्रतीतेऽर्थेऽखिलं शास्त्रं प्रमाणं बाधया विना ।
न पराशरवाक्यस्य बाधः स्मृत्यन्तरे क्वचित् ।
व्रतान्तरोपदेशश्च न बाधोऽस्याऽनिवारणात् ।
मीमांसकत्व मेतत्स्यात् वाक्यानुसरणेन यत् ।
व्यवस्थापन मन्यत्तु पाण्डित्यख्यापनं परम् ।
" इयं विशुद्धिरुदिता प्रमाप्यात्कामतोद्विजम् "।
इत्यकामकृते पापे नाशो निश्शेष उच्यते ।
न तु कामकृते शुद्धेराकिञ्चित्करतोच्यते ।
स्मृत्यन्तरेषु तच्छुद्धेः सामान्येनाऽभिधानतः ।
विशेषाऽदर्शनं यावत् तावत् सामान्यदर्शनम् ।
मानमेवाऽन्यथा ते स्यात् सर्वज्ञत्वेऽधिकारिता ।
गुणोपसंहृतिश्चैवं यथादर्शन मिष्यताम् ।
अदृष्टानुपसंहारेणाकिंचित्करतैवते ।

यथा च दृश्यते वाक्यं शक्तिश्चैवास्य यावती ।
तावत्कार्यं न तूपेक्षा युक्ता वैगुण्यशङ्कया ।
प्रायश्चित्ते तथाऽऽचारे यानिस्मृत्यन्तराण्यहम् ।
दृष्टवांस्तान्युदाहृत्य संहरिष्ये गुणांस्ततः ।
विषयस्य व्यवस्थां च मन्दव्युत्पत्तिसिद्धये ।
प्रवक्ष्यामि, यथापूर्वे निबन्धनकृत स्तथा ।
यत् यस्मिन् विषये प्रोक्तं तत्र तस्यप्रशस्तता ।
विवाक्षिता, नेतरस्य निषेधोऽत्र विवक्ष्यते ।
तद्विवेकाय कुर्वेऽहं व्याख्यां पाराशरस्मृतेः ।



(*b*) प्रथमोऽध्यायः ।

18. व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ।
धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलं च विस्तरात् ॥
19. शृणु पुत्र प्रवक्ष्यामि शृण्वन्तु मुनय स्तथा ॥
22. अन्ये कृतयुगे धर्माः त्रेतायां द्वापरे युगे ।
अन्ये कलियुगे नृणां युगरुपानुसारतः ॥
23. तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुः दानमेव कलौ युगे ॥

24. कृते तु मानवाधर्मा स्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥

25. त्यजेद्देशं कृतयुगे त्रेतायां ग्राम मुत्सृजेत् ।
द्वापरे कुलमेकन्तु कर्तारन्तु कलौ युगे ॥

26. कृते संभाषणा देव त्रेतायां स्पर्शनेन च ।
द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥

27. कृते तत्क्षणिकः शापः त्रेतायां दशभिर्दिनैः ।
द्वापरे चैकमासेन कलौ संवत्सरेण तु ॥

28. अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ।
द्वापरे याचमानाय सेवया दीयते कलौ ॥

29. अभिगम्योत्तमं दानं आहूयैव तु मध्यमम् ।
अधमं याचमानाय सेवादानन्तु निष्फलम् ॥

30. ाजता धर्मो ह्यधर्मेण सत्यं चैवाऽनृतेन च ।
जिता श्चोरैस्तु राजानः स्त्रीभिश्च पुरुषाः कलौ

31. सीदन्ति चाऽग्निहोत्राणि गुरुपूजा प्रणश्यति ।
कुमार्यश्च प्रसूयन्ते तस्मिन् कलियुगे सदा ॥

32. कृते त्वस्थिगताः प्राणाः त्रेतायां मांसमाश्रिताः ।
द्वापरे रुधिरं चैव कलौ त्वन्नादिषु स्थिताः ॥

33. युगे युगे च ये धर्माः तत्र तत्र च ये द्विजाः ।
तेषां निन्दा न कर्तव्या युगरूपा हिते द्विजाः ॥ इति ।

माधवाचार्यः ॥ युगरूपाः—युगानुरूपाः, कालपरतन्त्रा इति यावत्. .... .... .... .... .... .... ....

ननु एवं कलौ पापिना मनिन्द्यत्वात् कृत्स्नं धर्माधर्मव्यवस्थापकं शास्त्रं विप्लवेत् , तथाहि—"जितोधर्मोह्यधर्मेण" इति यदुक्तं तत्र "धर्मंचर" इति श्रूयमाणोविधिः पीड्येत .... .... .... ....

"प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रज स्तस्याः पिता पिबाति शोणितम् ॥" इति ।

यमवचनम्

" पितु र्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितु स्तस्याः सा कन्या वृषली स्मृता ॥

इति वचनम् तदुभयं कुमारीप्रसवस्याऽनिन्दायां बाध्येत इत्यत आह—

34. युगे युगे तु सामर्थ्यं शेषं मुनिविभाषितम् ।
पराशरेण चाऽप्युक्तं प्रायश्चित्तं विधीयते ॥ इति ।

(माधवाचार्यः) शेषं—अवशिष्टं, तत्तद्युगसामर्थ्यं मुनिभिः अन्यै र्विशेषेण भाषितम् मुनिभि स्तत्तद्युगसामर्थ्यं विधिनिषेधाभ्यां विशेषणे भाषितं

तथा विहितातिक्रमनिषिद्धाचरणयोः प्रायश्चित्तमपि चिरन्तनेन पराशरेणोक्तम् ॥

चकारो याज्ञवल्क्यमन्वादिसमुच्चयार्थः, प्रसिद्धा हि तदीयग्रन्थेषु प्रायाश्चित्ताध्यायाः। पराशरग्रहणं तु कलियुगाभिप्रायम् सर्वेष्वेव कल्पेषु पराशरस्मृतेः कलियुगधर्मपक्षपातित्वात् प्रायश्चित्तेष्वपि कलियुगविषयेषु पराशरः प्राधान्येनाऽऽदरणीयः। अतः पराशरमन्वादिप्रोक्तं प्रायश्चित्तं तत्तत्पापपरिहाराय विद्वत्परिषदा विधीयते ॥ एतदुक्तं भवति— नानामुनिभिः तत्तद्युगसामर्थ्यस्य प्रायश्चित्तस्य च प्रपञ्चितत्वात् तदुभयं पर्यालोच्य निन्दानिन्दयोः व्यवस्था कल्पनीया। यः पुरुषो युगसामर्थ्यं मनुसृत्य विहितानुष्ठानं प्रतिषिद्धवर्जनं प्रमादकृतपापस्य प्रायश्चित्तं च कर्तुं शक्तोऽपि नकुर्यात्, तद्विषयाणि "भ्रूणहत्यापितुस्तस्याः साकन्यावृषलीस्मृता" इत्यादिनिन्दावचनानि; अशक्तविषयं "तेषां निन्दा नकर्तव्या" इत्यादिवचनम् ॥ अत एव शैवागमे पठ्यते— "अत्यन्तरोगयुक्तेऽङ्गे राजचौर भयादिषु । गुर्वग्निदेवकृत्येषु नित्यहानौ न पापभाक्" इति तस्मात् न कोऽपिधर्मशास्त्रस्य विप्लवः इति ॥

ननु उक्त प्रकारेण युगसामर्थ्यस्य अशेषस्याऽनेकग्रन्थपरिचयमन्तरेण दुर्बोधत्वात् कथं मन्दप्रज्ञानां अल्पायुषां युगसामर्थ्यानुसारिणः चातुर्वर्ण्यसमाचारस्य निर्णयः? इत्यतआह—

35. अह मयैव तत्सर्वं मनुस्मृत्य ब्रवीमि वः ।
चातुर्वर्ण्यसमाचारं श्रृण्वन्तु मुनिपुङ्गवाः ॥ इति,

(*c*) माधवीये स्वयंवरः ।

मुख्यानुकल्पभेदेन दातृविशेषानाह नारदः (नारदस्मृतिः XII. 20—21)

पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः ।
मातमाहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माताऽत्वभावे सर्वेषां प्रकृतौ यदि वर्तते ।
तस्यामप्रकृतिस्थायां कन्यां दद्युः सनाभयः ॥
यदा तु नैव कश्चित्स्यात् कन्या राजान मात्रजेत् । इति,

याज्ञवल्क्योऽपि (I-63-64)

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरं ॥ इति,

गम्यं गमनार्हं सावर्ण्यादिगुणयुक्तमित्यर्थः तथाच नारदः

(XII. —23) सवर्णमनुरूपञ्च कुलशीलवयश्श्रुतैः ।
सहधर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥ इति,

"सवर्णं वरं प्राप्य" इत्यध्याहृत्य योजनीयं। एतच्चाऽसति रजोदर्शने द्रष्टव्यम्। दृष्टे तु रजसि सत्स्वपि पित्रादिषु काश्चित्कालं शासनं प्रतीक्ष्य तदुपेक्षणेन स्वयमेव वरं वरयेत्, तदाह बौधायनः (IV.1-14)

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्॥

अविद्यमाने सदृशे गुणहीन मपि श्रयेत्॥ इति; मनुरपि

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती।
ऊर्ध्वं तु कालादेतस्मात् विन्देत सदृशं पतिम्॥

अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम्।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति॥ इति,
सा यं भर्तारमधिगच्छति सोऽपि नैनोऽधिगच्छतीत्यर्थः॥ यत्तु विष्णुनोक्तं

ऋतु त्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम्। इति
तद्गुणवद्वरलाभे सति वेदितव्यम्॥ इति,

(*d*) माधवीये कन्याशब्दार्थविचारः।

ननु ऋतुमत्यां कन्याशब्दः कथं प्रयुक्तः, यतो यमेन "दशवर्षा भवेत्कन्या" इत्युक्तम्. न च दशमे वर्षे ऋतुः संभवति॥

नायं दोषः गौर्यादिशब्दवत् कन्याशब्दस्यापि यमेन परिभाषितत्वात्; सा च परिभाषा फलकथनादावुपयुक्ता तच्च पूर्वमेवोदाहृतम्. "कन्यां दद ब्रह्मलोकम्" इति. लोकप्रसिद्धस्तु कन्याशब्दः विवाहरहितस्त्रीमात्रमाचष्टे. एवं च सति शास्त्रेषु बहवः कन्याशब्दाः अनुगृहीता भवन्ति । तथा च आनुशासनिकेऽष्टावक्रोपाख्याने वृद्धास्त्रियां प्रयुक्तः—" कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः " इति, म. भा. आनु. 20. 22.

शल्यपर्वणि वृद्धस्त्रियां नारदेन प्रयुक्तः—

" असंस्कृतायाः कन्यायाः कुतो लोका स्तवानघे " इति, म. भा. श. 51. 10.

उमामहेश्वरसंवादेऽपि—

" ऋतुस्नाता तु या शुद्धा सा कन्येत्याभिधीयते " इति,

## 11 पतञ्जलिकैयटयोः।

### a. कन्याशब्दविचारः ।

### महाभाष्यम् ।

कन्यायाःकनीनच । सू. 4. 1. 116. इदं विप्रतिषिद्धम् ॥ को विप्रतिषेधः? ॥ अपत्यमिति वर्तते । यदिच्च कन्या नापत्यम् । अथापत्यं न कन्या । कन्या चापत्यं चेति विप्रतिषिद्धम् ॥ नैतद्विप्रातिषिद्धम् ॥ कथम्? ॥ कन्याशब्दोऽयं पुंसाऽभिसंबन्धपूर्वके संप्रयोगे निवर्तते, या चेदानीं प्रागाभिसंबन्धात् पुंसा सह संप्रयोगं

गच्छति तस्यां कन्याशब्दो वर्तत एव । कन्यायाः कन्योक्तायाः कन्याभिमतायाः सुदर्शनायाः यदपत्यं स कानीन इति ॥

प्रदीपः ।

यदीति अक्षतयोनिः कन्या, सा कथमपत्येन संबध्येतेतिभावः॥ अभिसंबन्धपूर्वक इति. शास्त्रोक्तो विवाहोऽभिसंबन्धः, तत्पूर्वके पुरुषसंयोगे कन्याशब्दो निवर्तते ; या तु शास्त्रोक्तेन विवाहसंस्कारेण विना पुरुषं युनक्ति सा कन्यात्वं न जहाति ॥ कन्योक्ताया इति. कन्यैवा सा वुक्ता ॥ तदेव व्याचष्टे कन्याभिमताया इति. कन्यैव साऽभिमता स्मृतिकारणामित्यर्थः॥ सुदर्शनाया इति. प्रकटदर्शनायाः अगुप्तत्वादित्यर्थः। अन्येत्वाहुः मुनिदेवतामाहत्म्यात् या पुंयोगेऽप्यक्षतयोनिर्भवति यथा कुन्ती मन्त्राहूतदिनकरोत्पादितकर्णाख्यपुत्रापि पुनः कन्यैवाऽभूत् तदपत्यं कानीनशब्दाभिधेयम्. ॥

(*b*) कुमारीशब्दविचारः ।

महाभाष्यम् ।

वयसिप्रथमे । सू. 4. 1. 20. वयस्यचरम इति वक्तव्यम् ; इहापि यथा स्यात् वधूटी चिरण्टीति ॥ इह कस्मान्नभवति ? उत्तानशया लोहितपादिका, द्विवर्षा, त्रिवर्षेति नैतानि वयोवाचीनि कथं तर्हि वयो गम्यते ? संबन्धाद्वयो गम्यते ॥ यदितर्हि तत्र संबन्धाद्वयो गम्यते ; तत्र न प्राप्नोति । इहापि न प्राप्नोति कुमारीति । अत्रापि

संवन्धात् वयो गम्यते । कोऽसौ संबन्धः ? । योऽसौ पुंसा सहासंप्रयोगः संबन्धादेवात्र वयो गम्यते । इह पुनः संबन्धसंबन्धात् इह तावत् उत्तानशयेति यदा कर्तृत्वं विशेषितं भवति तत उत्तरकालं वयो गम्यते ॥ द्विवर्षा त्रिवर्षेति । यदा द्विग्वर्थो विशेषितः तत उत्तर-कालं वयो गम्यते यदि तर्हि यत्र संबन्धादेव वयो गम्यते तत्र भवितव्यम् । इहापि प्राप्नोति । कन्येति । निपातनादेतत्सिद्धम् । किं निपातनम् ? "कन्यायाःकनीनच" इति ।

प्रदीपः ।

वयसि, वयस्य चरम इति । ये त्रीणि वयांसीच्छन्ति कौमारयौ-वनस्थाविराणि तन्मतेनेदं वक्तव्यं । वधूटचिरण्टशब्दयोः द्वितीयवयो-वचनत्वात् यदा तु द्वे एव वयसी उपचयापचयलक्षणे इति दर्शनं तदै-तन्न वक्तव्यम् यौवनस्यापि प्रथमवयोरूपत्वात्। उत्तानशयेति । एते हि शब्दाः प्रथमवयोविषयाः प्रयुज्यन्त इति भावः । नैतानीति । नैतेषां वयः प्रवृत्तिनिमित्तमित्यर्थः । संवन्धादिति । विशेषणविशेष्यभावलक्ष-णादित्यर्थः ततश्च बहिरङ्गत्वा द्वयःप्रतीतेः ङीप्नभवति । कुमारीति । पुंसा सहासंप्रयोगोऽस्य प्रवृत्तिनिमित्तम् । न तु प्रथमं वयः । तथा वृद्ध-कुमारीति प्रयोगः : पाणिगृहीती तु प्रथमवया अपि कुमारीशब्देन नोच्यते इति भावः ॥ संबन्धादेवेति । औत्पत्तिकात् वाच्यवाचकभाव-लक्षणात् संबन्धादित्यर्थः कुमारशब्दस्य हि प्रथमं वयः प्रवृत्तिनिमि-त्तम् । साहचर्यात्तु पुंसा सहासंप्रयोगमुपादाय वृद्धायां गौणः कुमारीशब्दः

प्रयुज्यते । संबन्धादिति । कर्तृमात्रादेरभिधेयस्य शब्दसंबन्धस्य प्रमाणान्तरावगतेन विशेषणेन संबन्धादित्यर्थः ॥ कर्तृत्वमिति । उत्तानशयेति शेतिक्रियायाः कर्त्रीशब्दार्थः । यदा तु प्रकरणादिवशात् प्रथमवयोविशिष्टा कर्त्री प्रतीयते तदा प्रथमवयोविषयत्वं बहिरङ्गमित्यर्थः । लोहितपादिकेति । अत्राप्यन्यपदार्थमात्रं शब्दार्थः विशेषप्रतिपत्तिः प्रकरणायत्ता । द्विवर्षेति द्वे वर्षे भूतेति ठञोवर्षात्लुक्चितवति नित्यं इतिलुक् अत्रापि परिमाणमात्रं शब्दार्थः शालादावपि प्रयोगात् । वयःप्रतिपत्तिस्तु प्रमाणान्तरनिबन्धना ।

—(*)—

## III. वैद्यनाथदीक्षितीयम् (वर्णाश्रमकाण्डम्)

*a.* विवाहमध्ये रजोदर्शने कर्तव्यविधिः

विवाहकाले रजोदर्शने कर्तव्यमाह

**अत्रिः**—विवाहे वितते यज्ञे होमकाल उपस्थिते ।

कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥

स्नापयित्वा तु तां कन्यामर्चयित्वा हुताशनं ।

युञ्जानहोमं कुर्वीत ततः कर्म प्रयोजयेत् ॥

प्रधानहोमे निर्वृत्ते कुमारी यदि सार्तवा ।

त्रिरात्रेऽपगते पश्चाच्छेषं कार्यं समापयेत् ॥

**स्मृतिभास्करे**—विवाहहोमे प्रक्रान्ते यदि कन्या रजस्वला ।

त्रिरात्रं दम्पती स्यातां पृथक्छय्यासनाशनौ ॥

चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि ।

विवाहहोमं कुर्यातामित्यादि स्मृतिसंग्रहः ॥

*b.* ऋतुस्नातायाअनभिगमने प्रत्यवायमाह ।

**पराशरः**—ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।

घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

**बोधायनः**—ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
पितरस्तस्य तन्मासं तस्मिंन्‌रेतसि शेरते ॥

(सन्निधिग्रहणादसन्निधावशक्तौ च न दोषः)

तथा **देवलः**—स्वयं दारानृतुस्नातान् स्वस्थश्चेन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भप्राप्तिं विनाश्य सः ॥

त्रीणि वर्षाण्यृतुमतीं यो भार्यां नोपगच्छति ।
स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयं ॥

ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहु स्तयोः पाप मयोनौ यश्च सिञ्चति ॥

(अनृतुगमनप्रातिषेधः स्त्रिया अनिच्छायां वेदितव्यः अन्यथा यथाकामी भवेद्वापीति वचनविरोधस्स्यात् )

———

## b. विवाहमध्येवध्वाः प्रथमार्तवप्रायश्चित्तम् ।

### हेमाद्रौ

**देवलः**—विवाहे वितते तंत्रे होमकाल उपस्थिते ।
वधूः पश्येद्यदा पुष्पं प्रथमं दोषसम्भवं ॥
सा वधूः शूद्रकन्यास्या त्तत्पति र्वृषलोपमः ।
तयोः पुत्रस्तु वृषलः ते यान्ति नरकं ध्रुवं ॥

**मरीचिः**—विवाहदिवसा द्राजन्नारभ्य प्रथमार्तवा ।
वधू र्या शेषहोमा त्प्रागुभौ नरकगामिनौ ॥

**गौतमः**—विवाहशेषहोमा त्प्राग्वधू र्या प्रथमार्तवा ।
तत्पतिस्सावधू श्चोभौ प्रायश्चित्तमिहार्हतः ॥

**गर्गः**—हविष्मतीरिमा अद्भि र्वधूं तां स्नापयेन्मुदा ।
अन्यवस्त्रेण संच्छाद्य तस्मिन्नग्नौ विधानतः ॥
संस्काराज्येन जुहुया द्युंजानेति द्वयं मुदा ।
हुत्वा तदाचरेत्कृच्छ्रं पावनं कायसंज्ञितं ॥
एवं वै प्रत्यहं कुर्यात् पञ्चमेऽहानि पूर्ववत् ।
स्नापयित्वा परीधाय पूर्ववच्छुद्धवाससा ॥
पूर्ववज्जुहुया द्वह्नौ ततश्चान्द्रायणं पृथक् ।
कृत्वातौ पापशुद्धौ स्तामन्यथा दोषसंभवौ ॥

तदानीं न प्ररित्याज्या पूर्वं पुष्पवती न चेत् ।
न योग्या हव्यकव्येषु सा नारी वृषली भवेत ॥
प्रायश्चित्तं तदा कृत्वा कर्म कुर्वन्नदोषभाक् ।

## IV. हेमाद्रिः (प्रायश्चित्तकाण्डम्)

*a*. असंस्कृतकन्यारजोदर्शनप्रायश्चित्तं ।

**देवलः**—पितु र्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
साकन्या वृषली ज्ञेया तद्भर्ता वृषलीपतिः ॥ वृषलः शूद्रः

**मार्कण्डेयः**— या कन्या पितृवेश्मस्था यदि पुष्पवती भवेत् ।
असंस्कृता परित्याज्या न पश्येत्तां कदाचन ॥
विवाहे च न योग्या स्याल्लोकद्वयविगर्हिता ।
एतां परिणयान्विप्रो न योग्यो हव्यकव्ययोः ॥
न तस्यां जनयेत्पुत्रं कानीन इति कथ्यते ।
माता पिता च पुत्रश्च त्रयस्ते वृषला स्स्मृताः ॥
यदा पुष्पवती कन्या तदैव त्यक्तुमर्हति ।
न तत्र दोषस्तस्यास्ति गेहस्थाचेत्सदोषभाक् ॥

**गौतमः**—यदा रहः पुष्पवती द्विजस्तामुद्वहेद्यदि ।
कालान्तरे यदा ज्ञाता तदा तां संपरित्यजेत् ॥
यदीच्छेदात्मन श्शुद्धिं तदा चान्द्रायणं चरेत् ।
कामातुरस्तदा वर्तेत्स चण्डालसमो भवेत् ॥
पुत्रोत्पत्ति र्यदि भवेत् तदा पतित एव सः ।

हेमाद्रौ—परिशेषखण्डे

अथस्वयंवरकालनिर्णयः ॥

**यमः**—कन्याद्वादशमे वर्षे प्रदातुर्नगृहेवसेत् ।

भ्रूणहत्या पितुस्तस्याः साकन्या वरयेत्स्वयम् ॥

**मनुरपि**—त्रीणिवर्षाण्युदीक्षेत कुमार्यृतुमती सती ।

ऊर्ध्वंतु कालादेतस्माद्विन्देतसदृशं पतिम् ॥

अदीयमानाभर्तारमधिगच्छेद्यदिस्वयम् ।

नैनः किंचिदवाप्नोतिनचयंसाधिगच्छति ॥

सोऽपिन पापमप्नोतीत्यर्थः ।

**वौधायनः**—अविद्यमानेसदृशेगुणहीनमपिश्रयेत् । सदृशे, गुणवति ।

**वसिष्ठः**— कुमारी ऋतुमती त्रीणि वर्षाण्युपासीत ऊर्ध्वं त्रिवर्षेभ्यः पतिंविन्देततुल्यम् ।

**यत्तुगौतमेनोक्तम्**—त्रीनृतूनतीत्यस्वयंयुज्येत ।

**यच्चविष्णुनोक्तम्**—ऋतुत्रयमुपास्यैवकन्याकुर्यात्स्वयंवरम् । ऋतुत्रयेव्यतीतेतु प्रभवत्यात्मनस्तथा [स्सदा]॥ तद्दतुत्रयादर्वाक् निषेधपरं, यदातुनवर्षत्रयमवस्थातुमलं तदा ऋतुत्रयादूर्ध्वम्

**कात्यायनः**—वरयित्वा तु यः कश्चित्प्रणश्येत पुरुषो यदा ।
रक्तागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पातिम् ॥ रक्तागमान्, ऋतून् ।

**नारदः**—प्रतिगृह्यतु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्समतिक्रम्य कन्यान्यं वरयेद्वरम् ॥

प्रतिगृह्य, वरयित्वा ।

केचित्तु ऋतुत्रयादूर्ध्वं स्वयंबरविधायकं पूर्वोदाहृत विष्णुगौतम-वचनं नारद कात्यायन वचनसमानार्थत्वेन व्याचक्षते, तदयुक्तम् । तत्रहि पितुरदानं प्रकृतं न तु वरयितु र्देशान्तरगमनं मरणं वा. तस्मात्प्रकृणानुरोधात्पूर्वैव व्याख्या श्रेयसी ।

यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं प्रतीक्ष्यवरयेत्स्वयम् ।

कश्चिद्दाता उक्तेषु मध्ये ।

**याज्ञवल्क्यः**—गम्यन्त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् ।

गम्यं, गमनार्हम् ॥

इति स्वयंवरकालनिर्णयः

## V आण्डपिळै ।

आपस्तम्भगृह्यप्रयोगवृत्तिः ।

वैवाहिकसमावेशनाविधि प्रकरणम्

ततो जयादिपरिषेचनान्तं कृत्वाऽपरेणाग्निं प्राचीमुपवेश्य तस्याश्शिरस्याज्यशेषात्किञ्चिदानीय ॥ भूः स्वाहा भुवः स्वाहा

स्रुवः स्वाहा ओंस्वाहा इत्यन्ते निनयति ॥ अपश्यन्त्वेति द्वाभ्यां मिथस्समीक्षणम् ॥ प्रथमो मन्त्रो वध्वाः ॥ उत्तरो मन्त्रो वरस्य ॥ वधूमन्यो वा वाचयति ॥ समञ्जन्त्विति ऋचा आज्यशेषेण दम्पत्यो र्हृदयदेशौ संमृज्य "प्रजापते तन्वंम" इति तिस्रो ऋचो जपित्वा ॥ आरोहोरुमित्यनुवाकशेषं समावेशनकाले जपेत् ॥ ऋतुमधिगम्य स्नातायां समावेशनकाले विष्णुर्योनि मित्यारभ्य तन्मेवायो समृद्धयेत्यन्तेन वधूमभिमन्त्रयते ॥ यदि चतुर्थीसमावेशन मृतुसमावेशनञ्च युगपत्प्राप्नुतः, तदा आरोहोरुमिति जपित्वा विष्णुर्योनिमिति वधूमभिमन्त्रयते ॥ चतुर्थदिवसादारभ्य षोडशादृतुदिवसादिति ॥

## VI निर्णयसिन्धुः ।

(कमलाकरभट्टः 1600—1700 A. D.)

(*A*) कन्याया रजोदर्शने तु अपरार्के **संवर्तः**—

माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ इति ।

**हारीतः** । पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पति र्वृषलीपातिः ॥ इति ।

**देवलात्रिकश्यपाः**–पूर्वार्धं तदेव

भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥

यस्तामुद्वाहयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिं ॥ इति ।

माधवीये **बोधायनः** ।

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् । इति

**विष्णुः** ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरं । इति ।

अत्र वरस्य दोषाभावमाह **यमः** ।

कन्या द्वादशवर्षाणि याऽप्रदत्ता वसेद्गृहे ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥
एवं चोपनतां पत्नीं नावमन्येत्कदाचन ।
न तु तां बन्धकीं विद्यान्मनुस्स्वायंभुवोऽब्रवीत् ॥ इति ।

**मनुः**—अलङ्कारं नाददीत पितृदत्तं स्वयंवरा ।
पितृदत्तं मातृदत्त स्तेयी स्याद्यदि तंहरेत् ॥

वरंप्रत्याह—

पित्रे न दद्यात् शुल्कन्तु कन्यामृतुमतीं हरन् ।
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥

(*b*) अत्र प्रायश्चित्तमुक्त **माश्वलायनेन**

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः ।
शुद्धिं च कारयित्वा तामुद्वहेदनृशंसधीः ॥
पिता ऋतून् स्वपुत्र्यास्तु गणयेदादितः सुधीः ।
दानावधि गृहे यत्नात् पालयेच्च रजोवतीम् ॥
दद्यादाद्दतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥
दद्याद्वाब्राह्मणेष्वन्नमातिनिस्स्वः सदक्षिणम् ।
तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥
उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात् कन्यायै रत्नभूषणम् ॥
तामुद्वहन् वरश्चापि कूष्माण्डैर्जुहुयात् द्विजः । इति

मदनपारिजाते **यज्ञपार्श्वः** ।

विवाहे वितते यज्ञे होमकाल उपस्थिते ।
कन्या मृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रवर्तयेत् ॥

**बौधायनसूत्रम्**—अथ यदि कन्या उपसाद्यमानावोह्यमाना वा रजस्वला स्यात् तामनुमन्त्रयेत्

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।

पुमानिन्द्रश्च सूर्यश्च पुमांसं च दधात्वियम् ॥ इति ॥

अथ द्वादशरात्रमलङ्कृत्य प्राशयेत्पञ्चगव्यमथ शुद्धां कृत्वा विवहेत् .

## VII धर्मसिन्धुः ।

(काशीनाथोपाध्यायः 1700—1800 A. D.)

अथ कन्या रजोदोषनिर्णयः.

विवाहात्पूर्वं कन्याया रजोदर्शने मातृपितृभ्रातॄणां नरकपातः कन्याया वृषलीत्वं, तद्भर्तुः वृषलीपतित्वम् । अत्र शुद्धिप्रकारः-कन्यादाता ऋतुसंख्यया गोदानानि, एकं वा गोदानं, यथाशक्ति ब्राह्मणभोजनं वा कृत्वा कन्यादाने योग्यो भवेत् । कन्या तूपवासत्रयान्ते गव्यपयः-पानं कृत्वा विप्रकुमार्यै सरत्नभूषणं दत्वा उद्वाहयोग्या भवति । वरश्च कूष्माण्डहोमपूर्वकं तामुद्वहन् न दोषी स्यादिति.

विवाहहोमकाले रजोदोषे तां स्नापयित्वा युञ्जानेतितैत्तिरीय-मन्त्रेण प्रायश्चित्तं हुत्वा होमतन्त्रं समापयेत् । यदा तु दात्रभावाद्रजो-दर्शनं तदा कन्या वर्षत्रयं प्रतीक्ष्य स्वयंवरं वृणुयात् । नात्र वरस्यापि दोषः। इति कन्यारजोदोषनिर्णयः ॥

## VIII संस्काररत्नमाला।

[भट्टगोपीनाथदीक्षितः 1800—1900 A. D.]

(A) कन्याया रजःप्राप्त्यनन्तरं दाने दोषमाह **शाट्यायनिः।**

माता च जनकश्चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥ इति..

**मरीचिरपि**—यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः।
असंभाष्यो ह्यपाङ्क्त्यः स उक्तो वृषलीपतिः॥ इति,

**हारीतोऽपि**—पितु र्गेहे तु या कन्या रजः पश्यत्यसंस्कृता।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः॥ इति.

असंस्कृता = अविवाहिता

(B) तत्र प्रायश्चित्तपूर्वकं विवाहमाह **शौनकः**

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्मनः।
पिता ऋतून् स्वपुत्र्यास्तु गणयेदादितस्सुधीः॥
दानावधि गृहे तिष्ठेत् पालयेच्च रजोवतीम्।
दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि॥
दातव्यैकापि यत्नेन दाने तस्या यथाविधि।
दद्याद्वा ब्राह्मणेष्वन्नमतिनिस्स्वः सदक्षिणम्॥

तस्यातीतर्तु संख्येषु वराय प्रतिपादयेत् ।

उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ॥

अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ।

तामुद्वहन् वरश्चापि कूष्माण्डै र्जुहुयात् घृतम् ॥ इति.

निष्कृतिमात्मनः कृत्वा, कन्यां च ऋतुमतीं शुद्धां कृत्वा वराय प्रतिपादयेत् इत्यन्वयः

स्वपुत्र्याःस्वकन्यायाः, तस्याः कन्यायाः, दाने कर्तव्ये, यथाविधि गोदानविधिना शक्तेन तदृतुसंख्या गावो दातव्याः, अशक्तेन त्ववश्यमेकापि गौ र्गोदानविधिना देयेत्यर्थः । उपोष्येति श्लोकेन दृष्टरजस्ककन्याया उपवासत्रयान्ते गव्यपयःपानपूर्वकं गोदानं विधीयते । अदृष्टरजसे कुमार्यै सरत्नभूषणदानेन विवाहयोग्यतोच्यते। तामुद्वहन् इत्यनेन वरस्य कूष्माण्डहोमेन तदुद्वाहयोग्यता प्रतिपाद्यते.

कन्यया गोदानोत्तरं पादकृच्छ्रमपि कर्तव्यम्—

"कन्यका तु विवाहात्प्राक् रजसा चेत्परिप्लुता ।

पादकृच्छ्रेण शुद्धा स्यात् पाणिग्रहणकर्मणि ॥"

इति हेमाद्रौ स्मृत्यन्तरोक्तेः.

**बोधायनस्तु—**

अथ यदि कन्योपसाद्यमाना वोह्यमाना वा रजस्वलास्यात् तामनुमन्त्रयते —

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।

पुमा निन्द्रश्च सूर्यश्च पुमांसं वर्द्धयत्वियम् ॥ इति.

अथ द्वादशरात्रमलङ्कृत्य प्राशयेत् पञ्चगव्यं, ततः शुद्धा भवति इत्याह—उपसाद्यमाना—दात्रा दीयमना, उह्यमाना वरणेन पाणिग्रहणेन वा, शब्दद्वयं उभयोः प्राधान्यं द्योतयितुम् ।

होमकाले रजो दर्शने तु **यज्ञपार्श्वः**—" विवाहे वितते यज्ञे होमकाल उपस्थिते *** तत स्तन्त्रं प्रवर्तयेत् " इति ॥

"युञ्जानः प्रथमं मन " इत्येकेन ऋङ्मन्त्रेण साध्या आहुति र्युञ्जानाहुतिः तां हुत्वेत्यर्थः ॥

यदा तु दात्रभावेन रजोदर्शनं तदा विशेषमाह—

**बौधायनः**—"त्रीणि वर्षाणि....गुणहीनमपि श्रयेत् " इति ॥
IV—1—15,16—

**मनु**रपि—" त्रीणि वर्षाणि..........नचयं साऽधिगच्छति " इति ॥
IX—90—91

अदीयमाना दात्रभावाद्दात्रुपेक्षणाच्च, सा यं भर्तारमधिगच्छति सोऽपि नैनोऽधिगच्छतीति **माधवेन** व्याख्यातम्.

यत्तु **विष्णु** वचनम् " ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् " इति, तद्गुणवद्वरलाभे वेदितव्यम्.



The Brahmavadin Press, Madras.